गङ्गानाथझापरिसरमूलग्रन्थमाला-५५



अद्वैतयतिप्रणीतम्

# राघवोल्लासमहाकाव्यम्

सम्पादकः
डॉ० रामकिशोर झा



राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
गङ्गानाथझापरिसरः
(गङ्गानाथझा-अनुसन्धानसंस्थानम्)
प्रयागः
२०११

अद्वैतयति-प्रणीतं

# राघवोल्लासमहाकाव्यम्

सम्पादकः
डॉ० रामकिशोरः झा



गङ्गानाथझापरिसरः
राष्ट्रियसंस्कृतसंस्थानम् ( मानितविश्वविद्यालयः )
आजादोद्यानम्, प्रयागः-211 002

राष्ट्रियसंस्कृतसंस्थानम्
मानवसंसाधनविकासमन्त्रालयाधीनः
मानितविश्वविद्यालयः

गङ्गानाथझापरिसरमूलग्रन्थमाला
प्रसूनम् - 55
प्रधानसम्पादकः
डॉ. प्रकाशपाण्डेयः

अद्वैतयतिप्रणीतम्

# राघवोल्लासमहाकाव्यम्

सम्पादकः
डॉ. रामकिशोरः झा

गङ्गानाथझापरिसरः
( राष्ट्रियसंस्कृतसंस्थानम् )
प्रयागः-2
2011

# Rashtriya Sanskrit Sansthanam

**Deemed University**
**Under the auspices of the ministry of Human Resources Development, Govt. of India**

## Ganganatha Jha Campus

**Text Series**
**No. 55**

**General Editor**
**Dr. Prakash Pandey**

# Rāghavollāsa Mahākāvyam

***by Adwaitayati***

**Edited by**
**Dr. Ram Kishore Jha**


## Ganganatha Jha Campus

**Rashtriya Sanskrit Sansthan**
**Allahabad - 2**

**2011**

अद्वैतयति-प्रणीतं

# राघवोल्लासमहाकाव्यम्


सम्पादकः

**डॉ० रामकिशोरः झा**





**गङ्गानाथझापरिसरः**

**राष्ट्रियसंस्कृतसंस्थानम् ( मानितविश्वविद्यालयः )**

**आजादोद्यानम्, प्रयागः-211 002**

प्रकाशकः

प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
( मानित-विश्वविद्यालयः )
गङ्गानाथझा-परिसरः,
इलाहाबादः -2

प्रथमं संस्करणम्



प्रकाशनवर्षम् - 2011

मूल्यम् :

978-93-83135-91-2

मुद्रणम्
एकेडमी प्रेस
दारागंज, प्रयागः

# अवतारिका

समुल्लसत्सु परःसहस्रेष्वपि सुरगवीप्रवीणैर्महाकविभिर्भासकालिदासभवभूति-भोजलक्ष्मणसूरिवेंङ्कटाध्वरिप्रमुखैर्निबद्धेषु राघवचरितोपजीवितेषु काव्येष्वनुदिनं श्रीरामचरितानुकीर्तनपराणां काव्यानां प्रसरः सर्वत्र भारते दृश्यत एव। रघुकुलतिलकस्य राघवस्य सुचरितरसायनसेवनचतुराणां गुणगणगरिष्ठानां सत्कवीनां सहृदयानां भक्तानां जननान्तरेभ्यः प्रसुप्ता कवित्वबीजपदप्रतिष्ठिता कापि प्रतिभा झटित्येव प्रस्फुरति, ततः काव्यं प्रसरति, तादृशे च काव्ये चमत्कारातिशयः स्वभावसिद्ध एवेत्यनुभूयते। तथ्येनोक्तं महाकविना मैथिलीशरणगुप्तेन–

राम! तुम्हारा वृत्त स्वयं ही काव्य है,
कोई कवि बन जाय सहज संभाव्य है।

प्रस्तूयमाणं राघवोल्लासकाव्यं भक्तिरसभरितं तस्माच्छिवेतरविलोपकमिति दिनेशतिग्मांशुभिरन्धकारमिवाशु जिह्मताततिं विदारयति, राघवपदतामरसे प्रह्वतामुल्लासयति दीपदेहलीवत्कवेरिव भावकस्यापि। उक्तमद्वैतयतिना राघवोल्लासकविना–

काव्यं न चेदं किमु कोऽपि मन्त्रो लोके स्वतन्त्रोऽपि रघूत्तमोऽयम्।
प्रयाति सद्यो वशतामशेषदोषौघहन्ता पठतां जनानाम्।। रा.१.२०।

भक्तिः परमेश्वरावताररराघवानुग्रहफला नतु नित्यनैमित्तिककाम्यादिकर्मफला, यतः स्वस्पन्दसमनन्तरमेव मोक्षस्वादोपलम्भिका हि सा। राघवोल्लासकविरद्वैताश्रमः श्रीरामकृष्णाश्रमचरणेभ्यः दीक्षितः शिथिलितकर्मानुष्ठानः प्रपञ्चरसविरस इति समाख्ययैव स्फुटं भासते।

आश्रमोपाख्याच्छाङ्करपीठमर्यादायां ज्योतिष्पीठसम्बद्धः श्रीराघवेन्द्रानुग्रहपवित्रितान्तः लब्धभक्तिरसः प्रतिसर्ग राघवस्य पारमेश्वर्यं कीर्तयन् काव्यशास्त्रमर्यादासु दत्तावधानः निर्दोषगुणवदलंकृतकाव्यं प्रसार्य संस्कृतकाव्यानुसन्धानरसिकानुपचकार। सरसप्रबन्धेषु रसानुकूलभाषासंरम्भः स्वाभाविक एवेति कविः कामयते–

वीणा प्रवीणा सततं यदीया, करद्वयी कान्तिमयी विभाति।
सा शुद्धवेशा कुमुदप्रकाशा, भाषा ममाशा परिपूरणेऽस्तु।। रा.१।२

इति मङ्गलवाक्यानुकूलमेवेयं रचनेति सहृदयाः स्वयमेव प्रमाणीकरिष्यन्ति।

यत् साध्यं तदनुकूलमेवाभिधानं साधनप्रस्तावस्य कुर्यादिति शिष्टपरम्परा वर्तते। अत्र प्रस्तावे रघुकुलतिलकस्य भगवतः श्रीरामस्य द्विविध उल्लासः कवेर्विवक्षितः प्रतीयते। आद्यः लौकिकैश्वर्यं तृणाय मत्वा धर्मस्य उल्लासः, स चाद्येषु सर्गत्रयेषु प्रस्तुतः। चरमश्च श्रीरामस्य लौकिकसम्पदुल्लासः, स हि चतुर्थसर्गाद् द्वादशसर्गं यावदुपस्थापितः। एवमुल्लासस्यैव साध्यत्वाद्राघवोल्लासेति समाख्या समुचिता।

अथास्य राघवोल्लासाभिधस्य काव्यरत्नस्य प्रस्तुतं संस्करणं परिसरे हस्तलेखागारे नियुक्तेन साहित्यशास्त्रविदुषा झोपाख्येन डॉ.रामकिशोरमहोदयेन ग्रन्थस्य भूमिकोद्धृतान् तत्तद्देश्यान् कोशान् प्रयासेनाहृत्य सम्यगग्र्यपाठनिर्धारणं विधाय सुविततया भूमिकयालंकृत्य निरमायि। तदवश्यमेव प्रस्तुतः राघवोल्लासग्रन्थः श्रीरामभक्तानां संस्कृतप्रबन्धानुरागिणाञ्च तोषायाह्लादाय निःश्रेयस्-सिद्धये स्यादिति कामयते,

प्रकाशपाण्डेयः

चैत्रशुक्ल-प्रतिपदा<br>
विक्रमसंवत् २०६८

प्राचार्यः<br>
गङ्गानाथझा परिसरः<br>
आजादोद्यानम्, प्रयागः

Prof. Ramkaran Sharma

(President Awardee Govt. of India)
**Visiting Professor of Sanskrit**
University of Pennsylvania
Email : ramkaransharma@yahoo.com
63, Vigyan Vihar
Delhi - 110 092
India : 011-43043476
USA : 0012015658438

ॐ

Joint Educational Advisor
(Min. of HRD Govt. of India)
Ex. Director, Rashtriya Sanskrit Sansthan
**Ex. Vice Chancellor,**
K.S.D. Sanskrit University, Darbhanga and
Sampurnanand Sanskrit University, Varanasi
**Ex. President I.A.S.S.**
Visiting Professor
Columbia University, University of Chicago,
University of California Berkeley

## नैवेद्यम्

जयतितमामद्वैतयतिः। जयतितमां च तदीयं राघवोल्लासमहाकाव्यम्। तथैव जयतितमां राष्ट्रियसंस्कृतसंस्थानगङ्गानाथझापरिसरः। जयतितमां च महाकाव्यस्यास्य विद्वत्तल्लजः सम्पादक आचार्यश्रीरामकिशोरः झा। वन्दना वर्धापनाश्च सहस्रशः प्रधानसम्पादकेभ्यो विद्वन्मानसराजहंसेभ्य आचार्यश्रीप्रकाशपाण्डेयेभ्यस्तत्सहयोगिभ्यश्च सर्वेभ्यः।

रामकथा "पुनः पुनर्जायमाना पुराणी" सदैव समेधयतितमां नवनवानानन्दोल्लासान्। द्वादशभिः सर्गैः समुपनिबद्धं नानारसभावगुणालङ्कारैर्मण्डितमिदं महाकाव्यं "पौरजनरामविरहोक्तिकथनादारभ्य रघुनाथायोध्याप्रवेशान्तां रामकथामुपस्थापयन् मनो हरति सहृदयशिरोमणीनाम्।

वर्धापनाः शतशः प्रकाशकोत्तमाय राष्ट्रियसंस्कृतसंस्थानाय।

इति विदुषां वशंवदः
रामकरणशर्मा
पूर्वनिदेशको
राष्ट्रियसंस्कृतसंस्थानस्य

मकरसङ्क्रान्तिः २०६८
14.1.2012

**प्रो. राजेन्द्र मिश्र**
*पूर्व-कुलपति*
**सम्पूर्णानन्द संस्कृत**
**विश्वविद्यालय,**
**वाराणसी - २२१००२**



दूरलेख : 'श्रुतम्'
दूरभाष : कार्यालय : (०५४२) २२०४०८९
: (०५४२) २२०४२१३
निवास : (०५४२) २२०६६१७
: (०५४२) २२०७४५७
फैक्स : (०५४२) २२०६६१७
E-mail : vcssvv_vns@satyam.net.in

# नान्दीवाक्

काव्यसंवादसिद्धान्तं विवृण्वता ध्वनिकारेणाऽचार्यानन्दवर्धनेन यदुक्तं वाच आनन्त्यमायान्ति यदि स्यात्प्रतिभागुण इति तदवितथमेव प्रतीयते। मर्यादापुरुषोत्तमस्य दशरथनन्दनरामस्यैव चरितं कियद्भिरेव काव्यनाट्यकथाचम्पूकारैर्नोपनिबद्धम्?

हन्त, तथापि सा हृद्याऽनवद्या कथाऽद्यापि वर्णनीयैव प्रतिभाति। एकैव प्राचेतसाभिमता रामकथा सहस्रधारतामुपगता बृहत्तरभारतमपि चम्पाकम्बुजसुवर्णद्वीपकटाहसिंहलमयं व्याप्तवतीत्यहो महदाश्चर्यम्!

अद्वैतयतिप्रणीतं राघवोल्लासाख्यमहाकाव्यमपि तस्या एव रामकथापरम्परायाः किञ्चिदभिनवं सुगन्धि प्रसूनमित्यहं मन्ये। तच्चाधुना गवेषणाधुरि विद्यमानैर्विद्वत्प्रवरैः सौजन्यार्जवपाण्डित्य-त्रिवेणीपरिस्नातैः डॉ० रामकिशोरझामहोदयैः सोचितपाठादानं सपाठभेदं सटिप्पणं सपरिमार्जनञ्च सम्यक्तया सम्पाद्य प्राकाश्यमानीयते इति महदुपकाराय साहितीजगतः।

कोऽयमासीदद्वैतयतिनामा कविः? कुतस्त्य आसीत्? कस्मिन् वा कालखण्डे जनिं लेभे? यद्यपीमे सर्वेऽपि प्रश्ना उत्कण्ठां शतगुणीकुर्वाणाः पाठकान् समुत्कण्ठयन्त्येव। परन्तु का गतिः अन्तर्बाह्यसाक्ष्याभावे? स्ववृत्तेरुल्लेखो, नाम्ना सह, प्रायेण दाक्षिणात्यैरेव क्रियते। यथा आनन्दरायमखीति, अमुक यज्वेति, अमुकसामश्रमीति वा। तेनाश्रम इत्युपनाम्नः कवेरभिजनं दक्षिणाशैव प्रतीयते। तत्रापि रामानुजसम्प्रदायसम्बद्धानां कवीनां राघवप्रियत्वं सर्वथा सहजमेव प्रतीयते। तेनाऽनुमातुं

शक्यते यद् रामभक्तोऽयं दाक्षिणात्यकविः मध्यकालावधिसम्भूतः (14तः सप्तदशख्रिस्ताब्दं यावत्) काश्यां निवसन् प्रबन्धकाव्यमिदं निबबन्ध। कस्यचित् प्रतापशाहस्याप्युल्लेखं कुरुते कविर्येनाऽसौ समादृतोऽभूत्। परन्तु तत्सर्वं शोधाधीनमेव। काश्या सार्धं कवेः प्रगाढानुराग इत्यपि वर्णनैः सिद्ध्यति।

भवतु नाम। तथापि काव्यगुणगरिमदृष्ट्या महाकाव्यमिदं स्वललितशैल्या समुदारपदबन्धैः रसालङ्कारच्छन्दोयोजनाभिश्च चित्तं प्रसह्याबध्नाति। डॉ० रामकिशोरझामहोदयं साधुवादैर्जयजीवशब्दैश्च संवर्धयाम्यहं सारस्वतमिममुपक्रमं सम्पूरयितुं शारदाशेवधिं समृद्धं विधातुञ्च।

- मिश्रोऽभिराजराजेन्द्रः

शिमला

11.3.2011

–मिश्रोऽभिराजराजेन्द्रः

□□

# शुभाशंसनम्

शास्त्रेषु प्रतिपादितं सुचरितं यद्राष्ट्रियं भारतं
तत्प्रायोगिकरूपमादिकविना रामेऽभिरामेऽन्वितम्।
तद्रम्यं युगबोधकं कविवरैः श्रीकालिदासादिभि-
राख्यातं सरसं प्रियङ्करमिदं जेगीयमानं परम् ॥1॥

अद्वैताख्ययतिप्रणीतपरमं मासाङ्कसर्गात्मकं
काव्यं भक्तिसमन्वितं विरचितं **श्रीराघवोल्लासकम्**।
अङ्गी भक्तिरसश्च यत्र परमः सन्नायको राघवः
**श्रीमद्रामकिशोरझाख्यविदुषा** सम्पादितं भ्राजते॥2॥

काले चार्कवरस्य भाति रचितं गोस्वामिनो मानस-
मेषोऽद्वैतयतिस्तदैव बहुशः शाहप्रतापादृतः।
काश्यां सर्जितवान् परं महदिदं **श्रीराघवोल्लासकं**
काव्यं यत्र कवेर्हि रामविषया भक्तिः परोद्भाविता॥3॥

आदौ श्रीरघुवंशभूषणमणेः **श्रीरामकृष्णस्य** च
श्रद्धाराद्धगुरोः प्रणामसरणिः स्तोत्रात्मिका निर्मिता।
पूर्वं रामवनाधिवासकरुणं संवर्णितं ह्लादकं
उद्वाहादिकथा ततोऽक्रमयुताऽलङ्कारभावोज्ज्वला॥4॥

वैदर्भीप्रथितप्रसादभरिताऽनुप्रासवर्णच्छवि-
र्भाषौचित्यसमन्वयः प्रतिपदं राराज्यमानोऽश्नुते।
वाल्मीकेरनुगामिनी रघुवरस्याप्ता कथा वर्णिता
सा किन्त्वत्र नवीनभक्तिभरिता भावैर्नवैस्सज्जिता॥5॥

अद्वैतो यतिरित्ययं तदपि तत्काव्यं परं वैष्णवं
विष्णोर्भक्तिभरं परं सगुणगं यद्वैष्णवानां धनम्।
भक्ती रामपदाङ्घ्रिपद्मयुगले ह्यस्मिन् कवौ शाश्वती
साद्यन्तं ह्यवलोक्यतेऽत्र महिता गोस्वामिसाम्योज्ज्वला।।6।।

मर्यादापुरुषोत्तमस्य चरितं राष्ट्रावनेः सङ्गतं
स्वाख्यातं प्रथमं यदादिकविना विश्वोपकारक्षमम्।
दिव्यं राष्ट्रचरित्रनिर्मितिकरं यद्वर्णितं साम्प्रतं
सर्वेषां हितकारकं प्रियतरं काव्यं न कस्मै प्रियम् ?।।7।।

एतत्पाण्डुलिपिस्थकाव्यमहितं पञ्चस्थलेषु स्थितं
सद्यत्नैर्लिपिपाठदक्षविदुषा झोपाख्यविद्यावता।
पाठालोचनपूर्वकं विलिखितं यन्मुद्रितं भ्राजते
प्रह्वीभूय ददामि योग्यविदुषे तस्मै शुभाशंसनम्।।8।।

मकरसङ्क्रान्तिः
ख्रि० 2011

प्रो० रहसविहारी द्विवेदी
शास्त्रचूडामणिः
राष्ट्रियसंस्कृतसंस्थानस्य
प्रयागस्थगङ्गानाथझा–परिसरः

# आत्मनिवेदनम्

अमन्दानन्दसन्दोहस्य विषयोऽयं यद्भगवत्या वाग्देवतायाश्चरणयोर्नूतनसुरभितप्रसूनकल्पं महाकविना श्रीमता अद्वैतयतिना प्रणीतं राघवोल्लासाख्यं भक्तिप्रधानं महाकाव्यं समर्पयता मया काचिदनिर्वचनीया तुष्टिरनुभूयते। भज्= सेवायां धातोः क्तिन् प्रत्यये कृते सति भक्तिपदस्य निष्पत्तिर्जायते। भज्यते= सेव्यते इति भक्तिः। तद्यथोक्तं गरुडपुराणे-

भज् इत्येष वै धातुः सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी[1]।।

सुविदितमेतद्यत्पुरुषार्थचतुष्टये परिगणितस्य मोक्षरूपस्य परमपुरुषार्थस्यावाप्तिरेव वेदोपनिषद्दर्शनपुराणेतिहासकाव्यनाटकप्रभृतीनां सकलशास्त्राणामात्यन्तिकं लक्ष्यम् । आत्मनः परमात्मनि लयः कथं भवेदेतदर्थं महर्षिर्बादरायणः स्वकीये ब्रह्मसूत्रे लिखति- 'अथातो ब्रह्मजिज्ञासा'[2]।

बृहदारण्यकोपनिषदि च - 'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यः निदिध्यासितव्यश्चेति'[3]।

तदभिसन्धिरयम्-कोऽहं कस्मादहं किमर्थमहमित्यात्मनः परमात्मनश्च विमर्शः प्रायशः पौनःपुन्येनास्माभिः प्राणिभिः करणीयः। जीवात्मनि परमात्मनि च भेदोऽभेदो भेदाभेदो वेति विचारो वेदान्तग्रन्थेषु निर्व्यूढं पल्लवितो विद्यते। तत्र भेदवादिनो वेदान्तिनो जीवे ब्रह्मणि च सामान्यरूपेणोपास्योपासकतया भेदमामनन्ति, अर्थाद् ब्रह्म उपास्यं जीवश्चोपासक इति भेदवादिनां मतम्।

कदाचिज्जन्मजन्मान्तरेष्वर्जितपुण्यवशान्मायामलापसारणेन ज्ञानोन्मीलितनयनानामात्मतत्त्वविदां जगद्गुरूणां श्रीमच्छङ्कराचार्यप्रभृतीनां परिणतबुद्धौ जीवात्मनि परमात्मनि चाभेदभावः समुपजनितः। एतावता डिण्डिमनिनादपुरस्सरं तेनोक्तम्- 'चिदानन्दरूपः शिवोऽहं शिवोऽहम् ' इति।

सामान्यतया जीवे ब्रह्मणि च सत्यपि भेदे भक्तेरन्तिमसोपानाधिरूढानां भक्तानां चेतसि परमार्थतोऽभेदस्य स्थितिरुत्पद्यते। तद्यथोक्तं नारदभक्तिसूत्रे- ओं तस्मिन् तज्जने च भेदाभावात्[4] ।

ओं सा कर्मज्ञानेभ्योऽप्यधिकतरा[5]।

---

1. शब्दकल्पद्रुमे तृतीयकाण्डे उद्धतम् , पृ.सं.463
2. वेदान्तसूत्रम्, 1
3. बृहदारण्यकोपनिषद्, 2/4/5
4. नारदभक्तिसूत्रम्, 41
5. तदेव, 25

ओं सैव ग्राह्या मुमुक्षुभिः[1] ।

ओम्-अन्यस्मात्सौलभ्यं भक्तौ।

ओं प्रमाणान्तरस्यानपेक्षत्वात् स्वयं प्रमाणत्वात् ।

ओं शान्तिरूपात् परमानन्दरूपाच्च[2]।

ओं त्रिसतस्य भक्तिरेव गरीयसी[3]।

ओं लभ्यते तत्कृपयैव[4] ।

ओम्-अनिर्वचनीयं प्रेमरूपं मूकास्वादवत्[5] ।

ओं प्रकाश्यते क्वापि पात्रे।

ओं गुणरहितं कामनारहितं प्रतिक्षणवर्द्धमानमविच्छिन्नं
सूक्ष्मतरमनुभवरूपम्।

ओं तत्प्राप्य तदेवावलोकयति, तदेव श‍ृणोति ,तदेव भाषयति ,तदेव चिन्तयति[6]।
शाण्डिल्यसूत्रे भक्तिलक्षणं यथा-

'अथातो भक्तिजिज्ञासा। सा परानुरक्तिरीश्वरे[7]।

एतावता आराधकस्य विमलचेतसि आराध्यविषयकरागत्वमेव भक्तित्वमित्यध्यवसीयते।।

विषयेऽस्मिन् भगवद्गीतायां भगवता श्रीकृष्णेनाप्युक्तम्-

'अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्[8]।।

---

1. नारदभक्तिसूत्रम्, 31
2. तदेव, 58-60
3. तदेव, 81
4. तदेव, 40
5. [illegible], 44
6. तदेव, 51-55
7. शाण्डिल्यसूत्रम्, 1
8. भगवद्गीता, 18/53-54

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम्[1]।।

एवञ्च–

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्[2] ।।

अन्यच्च–

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप![3]।।

अध्यात्मरामायणे श्रीरामवचनं यथा–

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः।
न कारणं मद्भजने भक्तिरेव हि कारणम्।।
यज्ञज्ञानतपोभिर्वा वेदाध्ययनकर्मभिः।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैस्सदा[4]।।

किं बहुना भागवतेऽपि भगवद्वचनं यथा–

एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं चिरम्[5] ।।

तथा च –

भक्त्याहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम्।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात्[6]।।

नैतावन्त्येवापि तु भागवतस्य नवमे स्कन्धे ब्रह्माणं सम्बोध्य करुणावरुणालय ईश्वरः स्वयमेव स्वीकरोति यत् –

---

1. भगवद्गीता, 12/7
2. तदेव, 18/55
3. तदेव, 11/54
4. अध्यात्मरामायणम् , 3/10/20-21
5. भागवतम्, 3/26/44
6. तदेव, 11/14/212

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज!।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः।।
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना।
श्रियं चात्यन्तिकीं ब्रह्मन्! येषां गतिरहं परा।।
ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम्।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे।।
मयि निर्बन्धहृदयाः साधवः समदर्शनाः।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा।।
मत्सेवया प्रतीतञ्च सालोक्यादिचतुष्टयम्।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविद्रुतम्।।
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि[1]।।

क्रमेऽस्मिन् भागवते भक्तराजस्य द्रुपदस्योक्तिर्यथा–

कीटेषु पक्षिषु मृगेषु सरीसृपेषु
रक्षःपिशाचमनुजेष्वपि यत्र यत्र।
जातस्य मे भवतु केशव! ते प्रसादा-
त्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च[2]।।

किं बहुना विष्णुपुराणेऽपि परमभागवतस्य प्रह्लादस्योक्तिर्यथा–

नाथ! योनिसहस्त्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि।।
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु[3]।।

---

1. भागवतम्, 9/5/63-68
2. कल्याणम्, भक्तचरिताङ्कः, पृ. 147
3. विष्णुपुराणम्, 1/20/19-20

अन्यच्च–

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि[1]।।

काव्यप्रकाशे श्रीमता मम्मटाचार्येणाप्युक्तम् –

'रतिर्देवादिविषया व्यभिचारि तथाञ्जितः, भावः प्रोक्तः[2]।

उक्तकारिकानुसारं देवादिविषयिणी रतिरूपा भक्तिरेव भावपदेनोपन्यस्ता विद्यते। भक्तकविःरूपगोस्वामिमहोदयः भक्तेः रसत्वमङ्गीकृत्य तन्निष्पत्तिविषये स्वकीये 'भक्तिरसामृतसिन्धु'नाम्नि लक्षणग्रन्थे कारिकामवतारयति–

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः।।
एषा कृष्णरतिः स्थायी–भावो भक्तिरसो भवेत्[3]।।

भक्तिरसस्यालम्बनविभावः–आराध्यदेवस्तद्भक्ताश्च।भक्तिरसस्योद्दीपनविभावः– आराध्यदेवस्य गुणश्रवणं,वैराग्यसाधनानि,शङ्ख–भृङ्ग–मालाप्रभृतीनि।भक्तिरसस्यानुभावो यथा–

नृत्यं विलुठितं गीतं क्रोशनं तनुमोटनम्।
हुङ्कारो जृम्भणं श्वासभूमालोकानपेक्षिता।।
लालास्त्रावोऽट्टहासश्च घूर्णा–हिक्कादयोऽपि च।
क्षान्तिरव्यर्थकालत्वं विरक्तिः मानशून्यता।।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः।
आसक्तिस्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले।।
इत्यादयोऽनुभावाः स्युर्जातभावाङ्कुरे जने[4]।

भागवते श्रीकृष्णवचनमप्युपर्युक्तं तथ्यं परिपोषयति। तद्यथा–

वाग् गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचिच्च।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति[5]।।

---

1. विष्णुपुराणम्, 1/20/27
2. काव्यप्रकाशः, 4/35
3. भक्तिरसामृतसिन्धुः, 1/5
4. तदेव, 2/2
5. भागवतम्, 11/14/24

एवमेव राघवोल्लासमहाकाव्येऽपि–

राजते भक्तराजः स यस्य रामस्मृतिर्भवेत्।
गात्रं रोमाञ्चितं नेत्रं सजलं विकलं वचः।।

पश्चादपि पुरो यस्य पार्श्वयोरन्तरेषु च।
रामचन्द्रः स्फुरद्रूपस्तस्य ज्ञापः कुतो भवेत्?।

रामध्यानसुधासारपूरपूर्णोदरस्य मे।
कथं यातूदयं वाञ्छा दुच्छास्वादान्नभोजने[1]?।।

हनुमन्नाटके रामभक्तिविषये पद्यं यथा–

इदं शरीरं शतसन्धिजर्ज्जरं
पतत्यवश्यं परिणामदुर्बलम्।
किमौषधं पृच्छसि मूढ! दुर्मते !
निरामयं रामरसायनं पिब[2]।।

पद्मपुराणेऽपि–

राम-रामेति विप्रर्षे! यस्मिन् न स्मर्यते क्षणे।
क्षणः स एव व्यर्थः स्यात् सत्यमेतन्मयोच्यते।।
सत्यं सत्यं पुनः सत्यं सत्यमेतन्मयोच्यते।
स्मरन्तो रामनामानि नावसीदन्ति मानवाः।।

अपि च–

ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलम्।
तत्सर्वं सिद्ध्यति क्षिप्रं रामनाम्नैव कीर्त्तनात्।।

भूतप्रेतपिशाचाश्च वेतालाश्चेटकादयः।
कूष्माण्डाः राक्षसाः घोराः भैरवाः ब्रह्मराक्षसाः।।
श्रीरामनामग्रहणात् पलायन्ते दिशो दश[3]।।

एवमेव राघवोल्लासमहाकाव्येऽपि–

स क्षणो रक्षणं नैव करिष्यति ममात्मनः।
प्रवदेद् यत्र नो जिह्वा रामरामेति जीवनम्[4]।।

---

1. राघवोल्लासः 3/190-192
2. रामरत्नसारसंग्रहे उद्धृतम्, Gnj. campus. Mss.N.12352
3. तत्रेव, " "
4. राघवोल्लासः 3/195

नान्यः कृपानिधिः रामात् लोके कोऽपि विलोक्यते।
कर्त्ताऽसंख्यापराधानां येनायं रक्षितः पदे।।

सत्यं प्रिये! त्वां प्रवदामि जिह्वे!
नामानिशं त्वं पठ राघवेति।
तद् वैपरीत्ये प्रकरोमि घातं
किञ्चापि पातं स्वनिवेशितस्ते।।

पुनः पुनरहं याचे प्रणिपत्याखिलान् सुरान्।
अनिशं मे भृशं भूयाद् रामनामपदस्मृतिः[1]।।

अपि च –

कथं दुःखेष्वयं लोकः स्तोकादेव निमज्जति?।
एतद् ह्येयं मनो देयं ध्येये रामपदाम्बुजे[2]।।

भक्तेः सोपानं गरुडपुराणे निपुणं निरूपितं विद्यते। तद्यथा–

'आदौ श्रद्धा ततः साधु-सङ्गोऽथ भजनक्रिया।
ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचिस्ततः।।

अथासक्तिस्ततो भावस्ततः प्रेमाभ्युदञ्चति।
साधकानामयं प्रेम्णः प्रादुर्भावे भवेत्क्रमः।।

भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते।
स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः।।

तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः[3]।।

भागवतस्य सप्तमे स्कन्धे भक्तराजेन प्रह्लादेन नवधाभक्तेरुल्लेखः कृतः। तद्यथा–

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्[4]।।

उपर्युक्तासु नवधाभक्तिषु क्रमशः नैपुण्यमासादितवतां परमभागवतानां भक्तानां नामान्यधस्तने स्फुटपद्ये सङ्कलितानि सन्ति।

---

1. राघवोल्लासः 3/196–198
2. तदेव, 3/202
3. गरुडपुराणम्, 219/10–12
4. भागवतम्, 7/12/11

तद्यथा–

श्रीविष्णो! श्रवणे परीक्षिदभवद् वैयासिकः कीर्त्तने
प्रह्लादस्मरणे त्वदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने।
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत्सद्युक्तिरेषा चिरम्।।

(कस्यचित्स्फुटपद्यम्)

उपर्युक्तभक्तिरसनिकषे राघवोल्लासाख्यं भक्तिकाव्यं कियत्सौष्ठवं विभर्त्तीति सहृदयसुधीभिर्विभावनीयम्।

प्रायशः समेषां काव्य-नाटकादीनामुपजीव्यभूतं ग्रन्थरत्नं रामायणं महाभारतञ्च बोभवीतीति विदुषां विदितचरम्। ख्रिष्टाब्दस्य सप्तदशशताब्द्यां लब्धजन्मना बङ्गप्रान्तीयेन महाकविना श्रीमता लक्ष्मणमाणिक्यदेवेन **'विख्यातविजयं'** नाम नाटकमारचितम्, यस्य सम्पादनं 2005 ख्रिष्टाब्दे मयैव कृतम्। एतन्नाटकस्य प्रस्तावनायामसौ महाकविर्लिखति–

'चतुर्वेदोक्तनिर्यासैर्व्यासेन ब्रह्मरूपिणा।
भारतमृतपाथोधिः परिमुक्तावधिः कृतः।।
तस्य शीकरकल्पेन वाग्वैदग्ध्येन साङ्कुरम्।
कवयोऽन्ये यशोबीजं जनयन्तः प्रतिष्ठिताः ।।
पुत्रद्वयमवाप्यैव विश्वरूपा सरस्वती।
आद्यं वल्मीकजन्मानं पाराशर्यमपूर्वजम्'[1]।।इति।।

द्वादशसर्गात्मकं राघवोल्लासाख्यं प्रकृतमहाकाव्यमपि रामायणकथामाधारीकृत्य भक्तकविना श्रीमता अद्वैतयतिना मूलकथायां किञ्चित् परिवर्तनेन सह (शङ्करपत्तने) काश्यामारचितम्। महाकाव्यलक्षणं साहित्यदर्पणे यथा–

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः।।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
श्रृङ्गार-वीर-शान्तानामेकोऽङ्गी रस इष्यते।।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्।।
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्।
आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा।।

---

1. विख्यातविजयम्, पृ. सं.7, सम्पादकः डॉ० रामकिशोरः झा,
गङ्गानाथ झा परिसरः, प्रयागः

क्वचिन्निन्दा खलादीनां सतां च गुणकीर्त्तनम्।
सर्ववृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः।।

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।।

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्।
सन्ध्यासूर्येन्दुरजनी-प्रदोषध्वान्तवासराः।।

प्रातर्मध्याह्नमृगया-शैलर्त्तुर्वनसागराः।
संयोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।।

कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नामास्य सर्गोपादेयकथया सर्गनाम तु[1]।।

प्रो० रहसविहारीद्विवेदिमहाशयैर्विरचितायां नव्यकाव्यतत्त्वमीमांसायां महाकाव्यलक्षणम् यथा-

सर्गैर्वृत्तैश्च बद्धं सहृदयहृदयाह्लादि शब्दार्थरम्यं
संवादैश्चोच्चशिल्पैः सततरसमयं ग्रन्थियुक्तं समृद्धम्।
पात्रं स्याद्यस्य मुख्यं परमगुणयुतं लोकविख्यातवृत्तं
भव्यं लोकस्वभावं महदपि महतां तन्महाकाव्यमास्ते[2]।।

अत एव महाकाव्यमिदं समधिकं भक्तिभावगर्भितं विविधरसगुणालङ्कारादिभिस्सुगुम्फितं महाकाव्योचितसकललक्षणलक्षितञ्च विद्यत इति न प्रयत्नप्रतिपादनीयतां याति, अपि तु महाकाव्यमिदं पठन्तोऽनुभवितुं शक्नुवन्ति सहृदयसुधीजनाः।

डॉ. फादर-कामिलबुल्के महोदयः 'रामकथा' नाम्नि स्वकीये ग्रन्थे राघवोल्लासमहाकाव्यस्योल्लेख-क्रमे लिखति- 'अद्वैत' नाम्ना केनचित् संन्यासिना वाराणस्यां महाकाव्यमिदमारचितम्, यस्य पूर्वाश्रमाभिधानं 'मुरारिः' आसीदिति। महाकाव्यस्यास्य प्रारम्भिकं सर्गत्रयं कुत्रचिन्नोपलभ्यते इत्यपि तत्रोल्लिखितं विद्यते। चतुर्थसर्गादारभ्य द्वादशसर्गं यावत् श्रीरामस्य जन्मत आरभ्य विवाहानन्तरमयोध्यां प्रत्यागमनपर्यन्तं कथानकमत्र मुख्यतयेन्द्रवज्राछन्दसि वर्णितं विद्यते[3]। आचार्यप्रवरेण श्रीमता बलदेवोपाध्यायमहाशयेन संस्कृतसाहित्येतिहासनाम्नि ग्रन्थे डॉ. बुल्केमहोदयस्योपर्युक्तं मतं तथैवोद्धृतम्[4]। डॉ. थेओडोर आफ्रेटमहोदयेन डॉ. वी. राघवनमहोदयेन च स्वस्वनिर्मिते पाण्डुलिपिसूचीग्रन्थे ग्रन्थाभिधानं राघवोल्लासः तत्प्रणेतुर्नाम, अद्वैतयतिः, अद्वैतभिक्षुः, अद्वैताश्रमो वेत्युल्लिखितम्। डॉ. श्रीधरभास्करवर्णेकरमहोदयस्य संस्कृतवाङ्मयकोशेऽपि ग्रन्थस्य नाम 'राघवोल्लासः' ग्रन्थकर्त्तुनाम अद्वैतरामभिक्षुरित्युपलभ्यते। के० कृष्णमाचार्यमहोदयेन स्वकीये 'क्लासिकलसंस्कृतलिटरेचर' नाम्नि सुप्रसिद्धे ऐतिह्यपुस्तके ग्रन्थस्याभिधानं

1. साहित्यदर्पणम् , षष्ठः परिच्छेदः
2. नव्यकाव्यतत्त्वमीमांसा, पृ०सं० 190, (प्रो० रहसविहारीद्विवेदः)
3. 'रामकथा, डॉ. कामिलबुल्के, (द्वितीयसंस्करणम्) पृ० 197-200 प्रयागः 1962'
4. संस्कृतसाहित्येतिहासः, बलदेवोपाध्यायः, पृ० 50

'राघवोल्लासः', तत्प्रणेतुर्नाम अद्वैतरामभिक्षुः, अद्वैतभट्टो वेत्युल्लिखितम्। किन्तु ग्रन्थकारस्य परिचयस्तु नैव कृष्णमाचार्यमहोदयेन दत्तः, न वा श्रीमता बलदेवोपाध्यायमहोदयेन। अस्यां परिस्थितौ महाकविरयं भारतवर्षस्य कं सुधन्यं भूभागं स्वजनुषाऽलञ्चकार इत्यस्मिन् विषये इदमित्थन्तया नैव वक्तुं शक्यते, किन्तु राघवोल्लासस्य वर्णनशैलीं वीक्ष्यैतदनुमीयते यन्महाकविरयं दाक्षिणात्यः ब्राह्मण आसीदिति। महाकविरयं राघवोल्लासस्य द्वादशतमे सर्गे स्वकीयाराध्यदेवस्य श्रीरामचन्द्रस्य जीवने एकां त्रुटिमभिलक्ष्य तमधिक्षिपन् त्रीणि पद्यानि लिखति, तत्क्रमेणैव स्वस्य ब्राह्मणकुलोद्भवत्वमपि सूचयति। तद्यथा–

दूरात्ते पदयोऽस्तु राघव! नतिः क्वत्या रतिः सेवने
स्मृत्वा तच्चरितं प्रयाति विततं कम्पं सशङ्कं मनः।
शुद्धायाः सुरसिन्धुनीरनिकरादप्यन्तरा पावकं
त्यक्ता भूमिभवा प्रियापि च दयाशून्येन माया त्वया ।।

तथा च–

अदयं राम! हृदयं त्वदीयं वेद्म्यसंशयम्।
दिव्यं नीताप्यहो! सीता वने त्यक्ता पतिव्रता?।।

अन्यच्च–

अहं त्वद्वैरिणो त्राता नाहं स्त्री न च वानरः।
नाहं शूद्रः कुतो राम! ब्राह्मणे मयि ते दया[1]।।

वस्तुतः भारतीयसंस्कृतवाङ्मये ग्रन्थकर्तृणां स्वग्रन्थेषु परिचयाभावस्य प्रमुखं कारणमिदं यदत्रत्याः विद्वांसः सौशील्यातिशयात् प्रचारनिरपेक्षत्वाच्च स्वरचनासु आत्मनः परिचयादिकं नैव ददतिस्म। तस्मादेव कारणादियं समस्या ग्रन्थसम्पादकानां तद्विमर्शकानाञ्च समक्षमापतति, किन्तु प्रकृतमहाकवेः परिचयविषये बाह्यसाक्ष्याभावादन्तःसाक्ष्येनैव यत्किञ्चित्परिचयादिकं मया समासादितम्, तदेवात्र पल्लवितं विद्यते।

महाकाव्यस्यास्य द्वादशसर्गे महाकविरयं स्वाश्रयदातुः परिचयमुखेन कानिचित्पद्यानि प्रस्तौति।

तद्यथा–

प्रतापशाहार्पितगौरवेण येनाप्यमानि त्रिदिवत्रिणाभः।
'मुरारिणा'ऽनेन समस्तमेतत् संन्यस्य काश्यामितमात्मरूपम्[2]।।

अथ च–

येनाकारि विचारि मानसमनोहारी 'कथासागरो'
ग्रन्थोऽग्रन्थि मतेः प्रतापनृपतेरादेशतः पूर्वतः।

---

1. राघवोल्लासः, 12/156–157, 159
2. तदेव, 12/108

काव्यानामपि यत्त्रयं गुणमयं श्रीरामनामाश्रयं
काश्यामद्य जयत्ययस्यनिलयः सोऽद्वैतनामा यतिः[1]।।

तथा च-

अयुतद्वयमानोऽपि 'कथासागर'संज्ञकः।
कृतो ग्रन्थस्तथाऽनेन रचिता 'भक्तिचन्द्रिका'[2]।।

एवञ्च-

अद्वैत एवं गुरुणाऽस्य नाम कृतं कृपातः करुणामयेन।
यत्पादकासारजनिप्रसाद-सञ्जातशक्तिः कुरुतेस्म काव्यम् ।।

अन्यच्च-

तद् द्वैतमद्वैतयतौ विभाति यच्चेतसा प्रेमरसाकुलोऽसौ।
सदा मुदा श्रीगुरुपादपद्मं सद्मश्रियो ध्यानपदं करोति[3] ।।

पुनश्च-

त्यक्त्वा कतृणवत्प्रपञ्चमखिलं योगीश्वरैर्दुस्त्यजं
चिन्ताजालपराङ्मुखः सुखयुतस्तिष्ठन् पुरे शाङ्करे।
जल्पन् दाशरथेर्दशाननरिपोः सीतेश! रामेत्यलं
कालं यो नयति प्रकृष्टनियतिः कोऽद्वैतभिक्षोः परः?[4]।।

उपर्युक्तपद्यानां पर्यालोचनेनैतत्परिज्ञायते यन्मुगलशासकस्य अकबरस्य (ख्रि० 1556-1627) शासनकाले तदधीनस्थः 'प्रतापशाह'नामा कश्चिल्लघुसामन्तः काश्यां शासकत्वेन नियोजित आसीत् । तदानीमेव 'मुरारि'नामा कश्चित्काव्यप्रतिभासम्पन्नः कविः काशीं सम्प्राप्य स्वकविकर्ममहिम्ना प्रतापनृपतिसम्पर्कमाजगाम। तत्सम्पर्के च काश्यामेव निवसन् मुरारिनामाऽसौ महाकविः संन्यासमधिगृह्य संन्यासनियमानुसारमात्मनः पूर्वाश्रमाभिधानं निगूहनार्थं 'अद्वैतयति' उत वा 'अद्वैताश्रम' नाम्ना प्रथितो जातः। पूनामातृकायाः, गङ्गानाथझा-परिसरीय- मातृकायाश्च पुष्पिकानुसारं महाकविरयं संन्यासग्रहणानन्तरं स्वसंन्यासदीक्षागुरोः श्रीरामकृष्णाश्रमसदृशं अद्वैताश्रमनाम्ना ख्यातिङ्गतस्तदुपोद्बलकं प्रमाणमधस्तनेयं पुष्पिका-

'इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर- श्रीरामकृष्णाश्रम-भगवतपूज्यपादशिष्याद्वैताश्रमविरचिते षष्ठः सर्गः'।।

---

1. राघोवल्लासः,12/109
2. तदेव, 12/110
3. तदेव, 12/111-112
4. तदेव, 12/122

एतावता **अद्वैतयतेरेवाभिधानान्तरं अद्वैतभिक्षुः, अद्वैताश्रमश्चासीदिति।** तदतिरिक्तमभिधानं भ्रान्तिमूलकमत एवास्वीकरणीयम्।

महाकविरयं स्वयं स्पष्टयति यदस्य आश्रयदात्रा श्रीमता **प्रतापशाहेन** विद्या-विनयसम्पन्ने विष्णुभक्तिपरायणाय वीतरागाय अस्मै महाकवये यत्सुख-सौविध्यं समुपयानीकृतम् , तदपेक्षया महाकविरयं स्वर्गस्यापि सुखं तृणवन्मेने। एवमेव पूर्वोक्ते द्वितीयपद्ये महाकविरयं स्पष्टयति यदसौ स्वाश्रयदातुः **'प्रतापशाह'**नृपतेरादेशात् सर्वप्रथमं सहृदयहृदयावर्जकं **'कथासागर'**नामकं ग्रन्थरत्नं काश्यामेव प्रणिनाय। तद् ग्रन्थरत्नं द्विसहस्रकथासंवलितमासीदिति पूर्वोक्ते तृतीयपद्ये समुल्लिखितं विद्यते। अनन्तरं महाकविरयं **'प्रतापनृपते'**रादेशादेव श्रीरामचरितमाधारीकृत्य ओजःमाधुर्य-प्रसादगुणसम्मिश्रं वैदर्भीरीतिसंगुम्फितं शब्दार्थालङ्कारझङ्कारैर्नितरां झङ्कृतं रस-भावपेशलञ्च **'राघवोल्लासा'**ख्यं भक्तिकाव्यं प्राणैषीत् । जीवनस्य पर्यवसाने च **'भक्तिचन्द्रिकां'** निर्माय स्वकीयमैहलौकिकं पार्थिवशरीरं समाधिलीनमकार्षीदिति।

एवमेव पूर्वोक्ते चतुर्थपद्ये महाकविरयं सूचयति यत् तस्य संन्यासदीक्षागुरुणा कृपापूर्वकं प्रदत्तमभिधानं **अद्वैतयतिरिति** वरीवर्त्ति। स्वसंन्यासदीक्षागुरोश्चरणरजःप्रसादादेवासौ कविकर्मणि प्रागल्भ्यं लेभे इत्यप्यङ्गीकृतम्।

**'असत्यवर्त्मनि स्थित्वा ततः सत्यं समीहयेदिति'** वाक्यपदीयवाक्यानुसारं भक्तानां चेतसि सर्वप्रथमं द्वैतबुद्धिरत्यावश्यकी। द्वैतबुद्ध्या आत्मानमकिञ्चनं मत्वा स्वाराध्यदेवं प्रति नवधाभक्तिमहिम्ना सर्वतोभावेनोपरतिरेवाद्वैतभावमुपजनयतीति पूर्वोक्तपञ्चमपद्यस्य पिण्डितार्थः। सद्गुरूपदेशाञ्जनवर्त्तिशलाकया ज्ञानोन्मीलितनयनोऽसौ महाकविरद्वैतयतिर्जागतिकमखिलं प्रपञ्चं तुच्छतृणवत्परित्यज्य सर्वतोभावेन चिन्तामुक्तः सन् काश्यामुषित्वा सर्वदा विष्णोरवतारस्य मर्यादापुरुषोत्तमरामचन्द्रस्य गुणकीर्त्तनेन, तच्चरितमाधारीकृत्य काव्यप्रणयेन च कालं नयति, तत्सदृशः कोऽन्यो धन्य इत्युक्त्वा स्वजीवनसार्थकतां प्रदर्शयत्युपर्युक्ते षष्ठे पद्ये।

महाकविरयं ग्रन्थारम्भे विघ्नविघाताय विघ्नविनाशनदक्षस्य श्रीमहागणपतेस्तदनु भगवत्याः वीणापाण्याः सरस्वत्याश्च नमस्कारात्मकं मङ्गलपद्यद्वयमुपस्थापयति। तदनन्तरं महाकविरयं वर्णनीयधीरोदात्तनायकस्य मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य नमस्कारात्मकं यन्मङ्गलपद्यं प्रस्तौति, तत्पद्यं प्रतिसर्गस्य प्रारम्भे मङ्गलाचरणरूपेणोपन्यस्तं दरीदृश्यते। तत्पद्यं यथा-

**रघुनाथाभिधं ब्रह्म जिह्मभावविदारणम् ।**
**नमामि विततानन्त-भवभीतिनिवारणम् ।।**इति।।

तदनन्तरं महाकविरयं काशीनिवासिनः महामहनीयमहिम्नः स्वसंन्यासदीक्षागुरोः यतिराजस्य **श्रीरामकृष्णस्य** वैशिष्ट्यप्रतिपादनमुखेनात्यन्तभक्तिभावविह्वलेन चेतसा तच्चरणयोर्नतिमर्पयति। तद्यथा-

**जयति हृदि मदीये सर्वदा रामकृष्णः**
**क्षयितविषयतृष्णः कृष्णपादैकधिष्ण्यः।**
**शुचिगुणयतिवर्यः कार्यकर्त्तृप्रभेद-**
**प्रतिहतमतिरेष क्लेशहर्त्ताश्रितानाम्**[1]।।

---

1. राघवोल्लासः,1/4

अपि च –

तं नित्यं नमत द्विजाः! यतिवरं श्रीरामकृष्णाश्रमं
पूर्वस्मिन् विहितश्रमं निगमवाच्याचारयुज्याश्रमे।
तुर्यस्थं समलङ्करोति मुनिता यं नग्नभालाग्निका
मुक्तेर्मुण्डनमागलाच्च विमलं वाराणसीमण्डनम्[1]।।

तथा च – रामकृष्ण –कथाप्रश्नमात्रत्रासितपातकः।
गुरुः कल्पतरुः कोऽपि यतिर्जयति मुक्तिदः ।।

एवञ्च–

यस्याङ्घ्रिपद्मस्मृतितोऽपि लोकाः
संसारशोकाद् बहवो विमुक्ताः ।
तस्मिन् गुरौ संहृतसर्वतृष्णे
श्रीरामकृष्णे विरते रतोऽस्मि ।।

अन्यच्च–

चेतोभुवोऽपि कामस्य जयाय निजवैरिणः।
धृताकारं हरं वन्दे रामकृष्णं दिगम्बरम्[2]।।

अपरञ्च–

वासो यस्य निरन्तरञ्च विजने नो वैजनेऽस्मिन् रुचि
वैराग्यैकरसः प्रपञ्चविरसः पापापवादेऽलसः।
पूर्तिं यान्ति यतः सतामपि मनः कामा अकामार्चित–
स्सोऽयं शङ्करपत्तने विजयते श्रीरामकृष्णो गुरुः।।

अन्तिमञ्च–

श्रीरामकृष्णयतिराजपदप्रसाद–
संसादिताखिलमनोरथसिद्धिसिद्धः।
अद्वैतभिक्षुरिह दिक्षु गुणैः प्रतीतः
काशीनिवासनिरतो विरतः प्रपञ्चात्[3]।। इति च।।

स्वसंन्यासदीक्षागुरोः श्रीरामकृष्णयतेर्वर्णनानन्तरं महाकविरयं प्रकृतमहाकाव्यस्य

---

1. राघवोल्लासः,1/5
2. तदेव, 1/7,9,10
3. तदेव, 1/11–12

माहात्म्यमुपवर्णयन् रामभक्तिचातकीभूतस्य भक्तस्य मुक्तिमार्गे पाथेयकल्पानि कानिचित्पद्यजातान्यारचितानि।

तद्यथा–

उल्लासो राघवस्यान्तः श्रवणादेव जायते।
'राघवोल्लास' एवायं श्रोतव्यो रामतत्परैः।।

सुधीभिर्निधिरादेयः काव्यरूपोऽयमुज्ज्वलः।
रामभक्तिः स्फुरन्नर्थः स्वार्थदोऽतः प्रपद्यते।।

भवानन्तमहाम्भोधौ पतितैः काव्यरूपिणी।
तरीर्गरीयसी सेव्या नव्या भव्या कृताऽधुना।।

रामचन्द्रपदद्वन्द्व - भक्तिवल्यैकजीवनम्।
भव्यैः सुसेव्यतां काव्यं सुधाधाराधराधरम्।।

श्रवणादस्य काव्यस्य न द्रवेद्यस्य मानसम्।
मया तु श्रूयते नासौ नरः सृष्टो विरञ्चिना।।

काव्यं न चेदं किमु कोऽपि मन्त्रो
लोके स्वतन्त्रोऽपि रघूत्तमोऽयम्।
प्रयाति सद्यो वशतामशेष-
दोषौघहन्ता स्मरतां नराणाम्।।

पुस्तकेऽधिगतेऽप्यत्र नाभ्यासं ये प्रकुर्वते।
रामस्य शपथास्तेभ्यः सभ्यभावाद् वदाम्यदः।।

नो कार्यमार्येषु बहुप्रवादैरदोविदोदारहृदाऽर्थयेऽहम्।
यथा भवेदस्य जने प्रचारस्तथा विचारः कृतिभिर्विधेयः।।

काव्यप्रचारे सततं विधेयं मनो घनोदारविचारसारैः।
नो कार्यमालस्यममुत्र मित्रैः भक्त्या पवित्रैः रघुनायकस्य[1]।।

तदयमाशयः–अस्मिन् महाकाव्ये वर्णितं रामचरितं श्रवणसमकालमेव भक्तचेतसि उल्लासमुपजनयति। एतावता रामभक्तितत्परैर्भक्तैरयं 'राघवोल्लासः' नूनमेव श्रोतव्यः, रामायणवदस्यापि पाठः करणीयः। रामभक्तिपरकोऽयं काव्यरूपः समुज्ज्वलः निधिः, सुधीनां कृते परमपुरुषार्थ एव स्वार्थस्तद्दाने सर्वथा समर्थोऽयं निधिस्तस्मात्सुधीभिरयं निधिर्नूनमेव ग्रहणीयः। संसारसागरे पतितानां जनानां कृते मया भक्तिरूपिणी अभिनवा नौका निर्मिता। इमां भक्तिनौकामधिरुह्य संसारसागरस्य पारं गन्तुं शक्नुवन्ति भक्तजनाः। भक्तिलतासाहाय्येनैव भगवतश्चरणयुगलयोरुपलब्धिरिति भावः। एतावता रामभक्ति- सुधाधारोपमं

---

1. राघवोल्लासः, 1/15-21,23-24

प्रकृतमहाकाव्यं श्रेयाभिलाषिभिर्जनैः संसेवनीयमित्यभिसन्धिः । एतत्काव्यस्य श्रवणसमकालमेव चित्तं द्रवीभूतं न भवेदेतादृशः मानवः विधात्रा नैव सृष्टः, इति महाकवेः द्रढीयान् विश्वासः। यद्यपि महाकाव्यमिदं किमपि मन्त्रस्थानीयं नैव, रघुपतिश्च संसारेऽस्मिन् सर्वथा स्वतन्त्रसत्ताकस्तथापि ये केचन महाकाव्यमिदं पठन्ति, तेषां वशवर्तित्वेन तत्सकलदोषापसारणे समर्थो भवतीति तात्पर्यम्। ये खलु महाकाव्यमिदमासाद्य एतत्पारायणं नैव करिष्यन्ति तान् प्रति महाकविरयमत्यन्तविनम्रतापूर्वकं भगवतः श्रीरामस्य शपथं ददाति। ये केचन सहृदयसुधीजनाः महाकाव्यमिदं पठनेन तद्वैशिष्ट्यजातैस्सुपरिचिता भविष्यन्ति, तान् प्रति औदार्यभावेन कार्यमेकं समर्पयति महाकविरयं यत् श्रेष्ठैः प्रेष्ठैश्च सह प्रवादनिरपेक्षतया येन प्रकारेण जनेष्वस्या रचनायाः प्रचारः प्रसारश्च भवेत्, तादृशः यत्नः कृतज्ञैः सहृदयसुधीपाठकैः करणीय इति। महाकाव्यस्यास्य प्रचार-प्रसारविषये महाकविरयं द्वितीयपद्येन पुनर्निवेदयति यत् रघुनायकभक्त्या पवित्रैरौदार्यगुणसम्पन्नैर्मित्रसमुदायैरेतत्प्रचारे प्रसारे च दत्तावधानैर्भाव्यम्, एतत्कर्मणि तैरालस्यं कदापि नैव कार्यमिति यावत्। एवम्प्रकारेण महाकाव्यस्यास्य महत्त्वमुपदर्शयताऽनेन महाकविना तत्समकालमेव महाकाव्यलक्षणसम्मतं सुजनदुर्जनवर्णनमपि प्रथमसर्ग एव प्रस्तुतम् । एतद्धि सुजन-दुर्जनवर्णनं आंशिकपरिवर्त्तनेन सह द्वितीये सर्गेऽप्युपन्यस्तं विद्यते। प्रतिसर्गमन्ते महाकाव्यनियमानुसारं छन्दःपरिवर्त्तनं समवलोक्यते। महाकाव्यस्यास्य रस-भावदृष्ट्या पर्यालोचनेनैतदवसीयते यदत्र भक्तिरसस्यैवाङ्गित्वम्, तदितरेषां करुण-वीर-शृङ्गार-हास्य-शान्तादीनां रसानामङ्गभावत्वं स्फुटीभवति।

**महाकाव्यस्यास्य मूलं कथावस्तु**

राघवोल्लासमहाकाव्यस्य कथावस्तु द्वादशसर्गैर्विन्यस्तं वरीवर्त्ति। सीतासहितयोः श्रीरामलक्ष्मणयोर्वनगमनानन्तरं तद्विरहदुःखं न्यूनीकरणार्थं मानसिकशान्त्यर्थञ्च दैवज्ञैः पूर्वनिर्देशितफलादेशानुसारमत्रत्यं रामचरितात्मकं निखिलं वर्णनं कौशल्यामुखेन सुमित्रायाः श्राव्यविषयतया समुपस्थापितं विद्यते। द्वादशसर्गस्याधस्तनं पद्यद्वयं तन्निदर्शनभूतम्-

श्रीरामविश्लेषहुताशकील-समागमव्याकुलया कथञ्चित्।
प्रोक्ता मयेयं रघुनाथवार्त्ता मूर्त्ता सुधासिन्धुरिवातुराणाम्।।

अपि च -

सञ्चिन्तयन्ती रघुनाथमेवमखण्डमेषा रघुनाथमाता।
जगत्समस्तं रघुनाथरूपमपश्यदत्रास्ति न चित्रलेशः[1]।।

**प्रथमः सर्गः**

महाकविरयमादौ भगवतो गणेशस्य भगवत्याः सरस्वत्याश्च नमस्कारात्मकं मङ्गलं विधाय वर्णनीयचरिनायकस्य श्रीरामचन्द्रस्य मङ्गलमाचरति। तदनु स्वगुरुं यतिराजं श्रीरामकृष्णाश्रमं सश्रद्धं प्रणमति। ततश्चतुर्दशपद्यानि यावत् महामहनीयमहिम्नः स्वगुरोः परिचयं ददाति। अतः परं श्रीरामचन्द्रस्य गुणवर्णनपुरस्सरं प्रकृतमहाकाव्यस्य महत्त्वं प्रतिपादयति। ततः सुजन-दुर्जनयोर्वर्णनं विधाय त्रिषष्ठिपद्यतः

---

1. राघवोल्लासः, 12/105, 106

श्रीरामवनगमनभूमिकामारचयति। अस्यां भूमिकायां रामे वनं गते सति अयोध्यायास्तद्विरहदशां परिकल्पयति। अत एवास्य सर्गस्य नामापि '**पौरजनरामविरहोक्तिवर्णनं**' विद्यते।

<u>द्वितीयःसर्गः</u>

सर्गेऽस्मिन् रामवनगमनविनिश्चयेन तद्विरहकल्पनया पौरजनानामवस्थितिश्चित्रिता विद्यते । श्रीरामो वनगमनात् प्राक् चतुर्दशवर्षं यावदुपभुज्यमानं धनं भूलोकदेवेभ्यः ब्राह्मणेभ्यः ददाति, तन्माहात्म्यञ्च वर्णयति। अत्र महाकविरयं ब्राह्मणेतरैर्जनैः ब्राह्मणधनं कदापि न ग्राह्यमिति धर्म्मशास्त्रसम्मतं मतं श्रीरामुखेन प्रस्तौति। प्रथमसर्ग इवात्रापि सुजन– दुर्जनवर्णनं चित्रितं विद्यते। अत्र पौरजना श्रीरामं वनगमनान्न्यवारयन्ति।

<u>तृतीयः सर्गः</u>

सर्गेस्मिन् सीतासहितयोः श्रीरामलक्ष्मणयोः वनगमनवर्णनं विद्यते। रामायणपरम्परामनुसृत्य प्रकृतमहाकविना **अद्वैतयतिना**ऽपि श्रीरामवनगमनस्य मार्गादिवर्णनं सहृदयहृदयावर्जकं व्यधायि। शृङ्गवेरपुरे गङ्गातटं संप्राप्य श्रीरामः श्रद्धापूर्वकं मातरं गङ्गां स्तौति, निषादराजस्य गुहस्यातिथ्यञ्च स्वीकरोति। ऐतषां गङ्गातटेऽवस्थितस्य वटवृक्षस्याधः जाते रात्रिविश्रामे निषादराजो गुहः प्रातः काले सीतासमेतौ श्रीरामलक्ष्मणौ नौकामारोह्य गङ्गापारं नयति। अत्रैवेते सर्वे वल्कलं परिधाय चित्रकूटं यान्ति। चित्रकूटं सम्प्राप्य तत्रत्यैः ऋषि–मुनिभिर्विहितमातिथ्यं सर्वे स्वीकुर्वन्ति। अस्मिन्नेव क्रमे मन्दाकिन्यामेतेषामभिषेकवर्णनं, पञ्चवट्यां लक्ष्मणविहितपर्णकुटीनिर्माणवर्णनं, तत्र च तेषां निवासवर्णनं सुविशदं पल्लवितं विद्यते। श्रीरामस्य चित्रकूटागमनेन तत्रत्याः वैरस्वभावाः हिंस्रपशवोऽपि परस्परं वैरभावं परित्यज्य सहैव सानन्दं क्रीडारताः जाताः। अस्मिन्नेव क्रमे चित्रकूटस्थः कश्चिद् वृद्धब्राह्मणः श्रीराममुपेत्य षड्विंशतिपद्येषु रामभक्तिभरमत्यद्भुतं विलक्षणञ्च वृद्धवर्णनं प्रस्तौति। एतद्धि वृद्धवर्णनं सर्वतोभावेन वैराग्यजनकं भगवदुपरतिमूलकञ्च वरीवर्ति। चित्रकूटे पर्णकुटीरे निवासानन्तरं तेषां दण्डकवनं प्रति प्रस्थानवर्णनेन तृतीयसर्गस्य परिसमाप्तिर्जायते।

<u>चतुर्थःसर्गः</u>

सर्गेऽस्मिन् कौशल्या सुमित्रां प्रति श्रीरामस्य बालचरितं श्रावयति। अत्र श्रीरामस्य बाललीलायाः तस्य तेजस्वितायाश्च बहुप्रभावकारि वर्णनं महाकविना कृतम्। प्रातः काले श्रीरामस्य प्रबोधवर्णनं रघुवंशमहाकाव्यस्य पञ्चमसर्गे सूतात्मजैर्विहितमज– प्रबोधवर्णनं स्मारयति। वस्तुतः वर्णनमिदं श्रीरघुपतेर्बाल्यकालस्यास्ति किन्तु वनङ्गते रामे कौशल्यायाः स्मरणरूपमस्ति। वर्णनमिदं सर्वतोभावेन वात्सल्य–रसगर्भितं विद्यते।

<u>पञ्चमःसर्गः</u>

सर्गेऽस्मिन् सर्वप्रथमं विश्वामित्रः यज्ञरक्षार्थं रामलक्ष्मणावानेतुं दशरथं प्रति साकेतमागच्छति। दशरथः विश्वामित्रस्य स्वागतं करोति। विश्वामित्रः दशरथं प्रति श्रीरामस्य महच्छक्तिमत्वमीश्वररूपत्वञ्च वर्णयति। ततोऽसौ सुबाहु–मारीचादिराक्षसानामुत्पातवर्णनं विदधाति। एतावता यज्ञरक्षार्थं राम–लक्ष्मणं प्रदातुं दशरथं

याचते। आदौ दशरथः विश्वामित्रस्य प्रस्तावं नाङ्गीकरोति, किन्त्वन्ततः गुरोः वशिष्ठस्योद्बोधनेन स राम-लक्ष्मणौ तस्मै सखेदं समर्पयति।

<u>षष्ठःसर्गः</u>

अस्मिन् सर्गे विश्वामित्रेण सह साकेतादागच्छन्तौ श्रीराम-लक्ष्मणौ मार्गे गुरोः विश्वामित्रस्य सङ्केतेन ताडकानामधेयां राक्षसीं विलोकितौ। विश्वामित्रः तां राक्षसीं हन्तुं श्रीरामं प्रेरयति। गुरोरादेशमधिगत्य श्रीरामः सहजतया ताडकायाः बधं करोति। ताडका राक्षसी मुक्तिमासाद्य श्रीरामं स्तौति। ताडकाबधेन सुप्रसन्नः विश्वामित्रः श्रीरामलक्ष्मणाभ्यामनेकाः शक्तीः दिव्यास्त्रञ्च प्रददाति। विश्वामित्रविहितयज्ञेषु विघ्नमाचरतामनेकेषां राक्षसानां राम-लक्ष्मणाभ्यां बधो विधीयते। क्रमेऽस्मिन् निशाचरप्रमुखयोः सुबाहुमारीचयोः, मारीचस्तु राम-विशिखेन समुद्रं नीतः सुबाहुश्च हतः। अस्मिन्नेव सर्गे धनुर्यज्ञविलोकनार्थं मिथिलेश्वरेण जनकेन कौशिकसमक्षं तदाह्वानपत्रं प्रेष्यते। कौशिकस्तत्पत्रं सहर्षं स्वीकृत्य श्रीरामलक्ष्मणाभ्यां सह मिथिलां प्रति प्रस्थितः। तेषां मिथिलागमनकाले श्रीरामस्य चरणरजःस्पर्शमात्रेण गौतममुनेः पत्न्याः अहल्याया उद्धारवर्णनमप्यास्ते।

<u>सप्तमःसर्गः</u>

सर्गेऽस्मिन् शापोद्धारानन्तरं गौतमपत्न्या अहल्याया श्रीरामं प्रति विहिता स्तुतिर्विद्यते। पत्युः शापेन शिलारूपेण परिणताया अहल्याया शापोद्धारः श्रीरामचरणरजःसंस्पर्शेण सञ्जातोऽत एव श्रीरामं प्रति कृतज्ञताभरं स्तोत्ररत्नमिदं विशेषेण सहृदयहृदयावर्जकं विद्यते। वर्णनेऽस्मिन् भक्तिरसः परां काष्ठां भजमानो विलसति। सम्पूर्णेऽस्मिन् सप्तमे सर्गे अहल्याकृतं श्रीरामस्तोत्रमेव पद्यशतकेषु चकास्ति। तस्मात्कारणान्महाकविरयं सर्गस्यास्याभिधानमेव **'अहल्यास्तुतिर्नाम'** सप्तमः सर्ग इति चकार।

<u>अष्टमःसर्गः</u>

अस्मिन् सर्गे श्रीरामलक्ष्मणाभ्यां साकं समागतस्य कौशिकस्य जनकपुरे महान् सम्मानो भवति। अत्र सीतायाः सख्यः श्रीरामस्य रूपलावण्यं वीक्ष्य सीतां प्रति तन्मनोहररूपस्य वर्णनं कुर्वन्ति। सीताऽपि स्वप्ने श्रीरामचन्द्रस्य मनोहररूपं वीक्ष्य तं प्रति अनुरक्ता सती सखीं सम्बोध्य स्वकीयां मनोदशां वर्णयति। स्वप्नार्थविज्ञानकलाप्रवीणा वीणाप्रिया नाम्नी तदीया सखी सीतामाश्वासयन्ती सती तस्यै अभिरामवस्तुनः प्राप्तिर्भविष्यतीति शुभसङ्केतं ददाति। अत्र सीतया सह सखीनां हास-परिहासादिकं महाकविना वर्णनानैपुण्येनाकारि। अत्र शताधिकैः पद्यैः श्रीरामलक्ष्मणयोः रूपलावण्यस्य वर्णनं महाकविना व्यधायि। सर्गान्ते च धनुर्भङ्गवर्णनं विद्यते।

**नवमःसर्गः**

सर्गेऽस्मिन् जाते हि धनुर्भङ्गे द्युलोके देवाः सुप्रसन्नाः जायन्ते देवाङ्गनाश्च नृत्यादिकं कुर्वन्ति। सीतायाः सख्यः श्रीरामस्य नीराजनमाचरन्ति। दूतमाध्यमेन जनकपक्षतः दशरथाय धनुर्भङ्गविषयकं पत्रं प्रेष्यते। तत्पत्रं प्राप्य नृपतिर्दशरथसहितास्सर्वे अयोध्यावासिनः सुप्रसन्नाः भवन्ति। मङ्गल–तोरणादिभिस्सम्पूर्णा अयोध्यानगरी सुसज्जिता सञ्जाता। तदनन्तरं राजा दशरथः विधिधैरलङ्कारादिभिस्समलङ्कृतै–र्वरयात्रिभिर्वीरयोद्धाभिस्सैनिकैश्च सह मिथिलां प्रस्थितः। मिथिलायां जनकराजेन नृपतेर्दशरथस्य भव्यं स्वागतं व्यधायि। जनकस्य सत्कारं संप्राप्य कृतज्ञः दशरथः कौशिकं प्रति गच्छति, तस्याभिनन्दनमभिवन्दनञ्च करोति। कौशिकः सुप्रसन्नः सन् दशरथं प्रति श्रीरामस्य ईश्वरत्वं भूभारापनयनक्षमत्वञ्च प्रतिपादयति। तत्रोपस्थितः श्रीरामः पूर्वोक्तं राक्षसबधादिकं निखिलं कार्यजातं गुरोःकृपयैव सुसम्पन्नमिति सूचयति।

**दशमःसर्गः**

सर्गेऽस्मिन् गुरुवशिष्ठस्य मार्गदर्शने उभयपक्षीयैर्दैवज्ञैर्विवाहमुहूर्त्तः निश्चीयते। जन्मलग्नानुसारं चन्द्रतारादिकस्य विचारपूर्वकं निश्चिते हि विवाहमुहूर्त्ते गुरुर्वशिष्ठः जनकपुरोहिताय सतानन्दाय श्रुतिमन्त्रतन्त्रैरभिमन्त्र्य हरिद्रामर्पयितुमादिशति। तदनु हरिद्राचूर्णेनोद्वर्त्तननिर्माणं भवति। श्रीरामशरीरे उद्वर्त्तनलेपकाले गुरुर्वशिष्ठो कर्मकाण्ड– विधानानुसारं मङ्गलपद्यान्युच्चारयति। सीताशरीरे उद्वर्त्तनलेपकाले जनकपुरोहितः सतानन्दः मङ्गलपद्यान्युच्चारयति। तदनु सीतारामयोश्शरीरे कस्तूरिका–चन्दनलेपपुरस्सरं स्नानवर्णनं, वस्त्राभूषणधारणवर्णनं, तैलोद्वर्त्तनवर्णनं, उभयोश्शशरीरशोभावर्णनं, सीतया सह सखीभिर्विहितं परिहासवर्णनञ्च यथाक्रमं सुष्ठुतया पल्लवितं चकास्ति। अस्मिन्नेव क्रमे कौशल्या सुमित्रां प्रति पुनः कथयति यदेकस्तु मम परमं सौभाग्यं यन्मया श्रीरामसदृशः पुत्रो लब्धोऽपरतश्च मम दौर्भाग्यं यत्तस्मात्सम्प्रत्यहं वियुक्ताऽस्मि। मम चित्तं सर्वदा तदीयशरीरशोभां पुनरवलोकयितुं समुत्कण्ठितं विद्यत इति।

**एकादशःसर्गः**

अस्मिन् सर्गे प्रमुखतया श्रीसीतारामयोर्विवाहस्य मनोहारि वर्णनं महाकविना श्रीमता–अद्वैतयतिना कृतम्। श्रीरामस्य शस्त्रगुरोर्विश्वामित्रस्य, शास्त्रगुरोर्वशिष्ठस्योपस्थितौ सपत्नीको जनकः समागते हि विवाहमुहूर्त्ते कर्मकाण्डविधानेन शाखोच्चारपूर्वकं कन्यादानमन्त्रमुच्चार्य स्वदुहितायाः सीतायाः करं श्रीरामकरे ददौ। श्रीसीतारामयोः सम्पन्ने हि विवाहकृत्ये देवलोकादानन्दसूचकाः वाद्यनादाः दुन्दुभिर्ध्वनिश्च गुञ्जितो जातः। दूर्वाक्षतकाले च देवलोकादपि पुष्पवृष्टिर्जाता। अनन्तरं सीतासखीनां श्रीरामसीतां प्रति विहितैः कतिपयैर्हासपरिहासगर्भितैर्विनोदवाक्यैस्सर्गस्यास्य परिसमाप्तिर्जायते।

**द्वादशःसर्गः**

सर्गेऽस्मिन् श्रीसीतारामयोर्विवाहानन्तरमुभयोः कौतुकागारगमनवर्णनमपि सर्वथाऽपूर्वमेव। कौशल्या सुमित्रामभिलक्ष्य कथयति यत् कौतुकागारवर्णनेऽहमप्यसमर्थाऽस्मि। मणिप्रदीपैस्सुसज्जिते कौतुकागारे जनकनन्दिनी सीता श्रीरामस्य नीराजनमाचरति तच्चरणयोः प्रणामाञ्जलिञ्चार्पयति। अत्रापि

सीतासखिभिर्विहितगूढहासपरिहासैः श्रीरामो नितरां मुदितोऽवलोक्यते। अतः परं श्रीजनकेन प्रदत्तमुपहारादिकमादय श्रीसीतारामयोर्वरयात्रिभिस्सह अयोध्याप्रस्थानवर्णनं विद्यते। अयोध्यायां श्वश्रूभिः श्रीसीता–रामयोः स्नेहभरं स्वागतादिवर्णनमनेन महाकविनाऽत्यन्तप्रभावकारिरूपेण प्रस्तुतम्। सर्गान्ते च पुनः महाकविरयं स्वगुरोः श्रीरामकृष्णस्य स्वाश्रयदातुश्च नृपतेः प्रतापशाहस्य श्रद्धासमन्वितं कृतज्ञताभावभरं वर्णनमकार्षीदिति।

महाकाव्येऽस्मिन् सर्वेषु सर्गेषु प्रकृतभक्तकवेः स्वाराध्यदेवं श्रीरामं प्रति भक्तिभावः पद्यमुक्तासु सूत्रमिवानुस्यूतो दरीदृश्यते। यद्यपि स्थूलदृष्ट्या श्रीरामस्य वनगमनानन्तरं तस्य जन्मविवाहादिवर्णनेषु क्रमभङ्गः प्रतीयते किन्तु यथार्थतया प्रतिभासम्पन्नेन महाकविना अद्वैतयतिना श्रीरामवनगमनात्पुत्रविरहातुरायाः कौशल्यायाः स्वपुत्रस्य जीवनं स्मारं स्मारं सुमित्रां प्रति कथनरूपं वस्तुविन्यासकल्पनमत्यद्भुतं मौलिकं विच्छित्तिभरञ्चेति मन्ये।

कथानकस्य भूमिकामारचयितुमत्रत्यं प्रारम्भिकं सर्गत्रयं (Flash-Back) पूर्वदृश्यरूपेणोपस्थापितं वरीवर्त्ति। महाकाव्यस्यास्य मूलभूतं कथानकं तु चतुर्थसर्गादेवारभ्यते। एतेन यावन्ति श्रीरामकथासम्बन्धीनि काव्यानि वर्त्तन्ते, तेष्वस्य महाकाव्यस्य वस्तुविन्यासपद्धतिः किमप्यद्भुतं चमत्कारमुपजनयति। श्रीरामचन्द्रस्य जीवने–उल्लासपक्षमाधारीकृत्य भक्तकविना अद्वैतयतिना महाकाव्यमिदमारचितम्। एतावता महाकाव्यस्यास्याभिधानं राघवोल्लाससमजनि। महाकाव्यमिदं नूनमेव श्रीरामकथानुरागिषु सहृदयेषु विशिष्टं स्थानं प्राप्स्यतीति मे द्रढीयान् विश्वासः।

काव्येऽस्मिन् श्रीरामस्य चरितवर्णनेन सह भारतीयशास्त्राणां लोकविश्वासानां संस्कृति–संस्काराणाञ्चाभिनिवेशो महाकविनाऽत्र नैपुण्येन व्यधायि । रामकथामाश्रित्य प्रणीतैरन्यकाव्यैस्सह प्रकृतमहाकाव्यस्य तुलनात्मकमध्ययनं, काव्यशास्त्रदृशा भक्तिशास्त्रदृशा च विमर्शः, स्वतन्त्रशोधग्रन्थेष्वपेक्ष्यन्ते।

दैवदुर्विपाकान्महाकवेरस्य **'कथासागरः'** **'भक्तिचन्द्रिका'** चेति–ग्रन्थरत्नद्वयमिदानीं विश्वेऽस्मिन्नवस्थितेषु पाण्डुलिपिग्रन्थागारेषु कुत्रचिन्नोपलभ्यते। एतावता महाकविना अद्वैतयतिना प्रणीतमुपर्युक्तं ग्रन्थरत्नद्वयं कालकवलितं जातमिति मन्ये। सौभाग्यवशादमुनैव महाकविना अद्वैतयतिना प्रणीतं **'राघवोल्लासाख्यं'** महाकाव्यमद्यावधि–अप्रकाशितं सद् राष्ट्रियसंस्कृतसंस्थास्य गङ्गानाथझा–परिसरीये पाण्डुलिपिग्रन्थागारे मातृकारूपेण सुरक्षितं विद्यते। पाण्डुलिपि–विभागे कार्यरतेन मया पाण्डुलिपीनां सूचीकरणकाले 1988 खिष्टाब्दे मातृकेयमक्षिलक्ष्यीकृ ता। तदानीमेवैषजनस्तत्कालीनप्राचार्यमहोदयानां प्राच्यपौरस्त्योभयविधभाषासुविदल्लानां विद्या–विनयसम्पन्नानां सारस्वतसदनोद्भासकानां प्रथितयशसां डॉ० गयाचरणत्रिपाठिमहाशयानां समक्षं एतद्ग्रन्थरत्नस्य सम्पादनानुमतिमवाप्तुकामः सम्प्राप्तः। विद्याव्यसनिनः कल्पवृक्षकल्पास्तेऽनतिचिरादेवैकेन कार्यालयीयादेशपत्रेणास्मदीयामभ्यर्थनां स्वीकृत्य महाकाव्यस्यास्य सम्पादनानुमतिं दत्तवन्तः। किं बहुना, समुचितपाठनिर्धारणहेतवे चतुःसंख्याकेषु विविधपाण्डुलिपिग्रन्थागारेषु विद्यमानानां महाकाव्यस्यास्य मातृकाणां माईक्रोफिल्म, छायाङ्कितपत्राणि च कार्यालयीय–पत्राचारप्रक्रियया, कुत्रचित्स्थानेषु मां सम्प्रेष्य च वर्षाभ्यन्तरमेव ते मह्यं सुलभान्यकारिषुः।

### मातृकाणां परिचयः

एतन्महाकाव्यस्य पञ्चमातृकाः सुलभाः जाताः। सर्वाः मातृकाः कर्गदपत्रेषु देवनागर्यां लिप्यामालिखिता प्रायश अपूर्णा एव। किन्तु सर्वासां मातृकाणां योगेन महाकाव्यमिदं परिपूर्णतां भजते। तासां मातृकाणां प्राप्तिस्थानान्यधोनिर्दिष्टानि सन्ति–

| संस्थाया अभिधानम् | स्थानम् | अधिगम–संख्या | पत्र–संख्या | आकारः | प्रतिपत्रे–पंक्तयः | अक्षराणि | सम्वत् |
|---|---|---|---|---|---|---|---|
| (क) सिन्धिया–ओरिएण्टल–इन्स्टीट्यूट | उज्जयिनी | 328 | 1–58, 60–147 | 22×8cm | 08 | 30 | 1683 |
| (ख) इण्डिया– आफिस–लाइब्रेरी | लन्दनः | 3915/1138 | 1–109 | नोपलभ्यते | 07 | 36 | ख्रि0 1625 |
| (ग) भारतकलाभवनम् (बी.एच.यू.) | वाराणसी | (10ए)626 | 1–42 | 27. 5×10cm | 07 | 32 | नास्ति |
| (घ) राष्ट्रियसंस्कृतसंस्थानम्, गङ्गानाथ झा–परिसरः | प्रयागः | 33196 | 2–60 | 24. 5×10cm | 08 | 34 | नास्ति |
| (ङ)भण्डारकर–ओरिएण्टल–रिसर्च–इन्स्टीट्यूट | पुण्यपत्तनम् (पूना) | 66/2 | 1–28, 30–57 | 21×9. 5cm | 09 | 32 | नास्ति |

यद्यप्युनषष्ठितमस्य पत्रस्य राहित्यादुज्जयिनीमातृका अपूर्णैव। तथापि लिपेः प्राचीनत्वात् पाठस्य शुद्धत्वाच्चेयं मातृका आदर्शमातृकारूपेण मयाऽङ्गीकृता, 'क' संज्ञया च संज्ञिता। 'ख'स्थानीयायाः लन्दनमातृकायाः लिपिकारः पूर्वप्राप्तां कामप्यपूर्णां मातृकामाधारीकृत्य प्रतिलिपिं कृतवान्। अत एवैतस्यां मातृकायां चतुर्थसर्गादेव कथानकं विलिखितं वरीवर्त्ति। अस्यां मातृकायां रघुनाथबाललीलावर्णनादेव कथानकमुपलभ्यते। एतद्धि सर्गान्ते प्रदत्तपुष्पिकयाऽपि परिपुष्णाति । एतस्याः मातृकायाः प्रारम्भिकसर्गस्य पुष्पिकेयमवलोकनीया–''इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर श्रीरामकृष्णाश्रमभगवतपूज्यपादशिष्याद्वैताश्रमविरचिते चतुर्थः सर्गः'' इति।

चतुर्थसर्गतः द्वादशसर्गं यावन्निखिलवर्णनमन्याभिः सर्वाभिः मातृकाभिः सह साम्यं भजते। अत्रत्यः लिपिकारः सर्गान्ते पुष्पिकायां वर्णितविषयस्योल्लेखमपि नैव करोति। सर्गत्रयस्य राहित्यान्मातृकेयं सर्वथा अपूर्णा विद्यते। इमामपूर्णां लन्दनमातृकां वीक्ष्य फ़ादरकामिलबुल्केमहोदयः 'रामकथा'नाम्नि स्वकीये ग्रन्थे लिलेख – महाकाव्यस्यास्य प्रारम्भिकं सर्गत्रयं विलुप्तं जातमिति।

भारतकलाभवनादुपलब्धायां मातृकायां तृतीयः सर्गोऽप्यपूर्ण एव किन्तु लिपिर्नितरां सुस्पष्टा, तस्मादियं मातृका 'ग' संज्ञया मया संज्ञिता।

राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथ झा–परिसरीयायां मातृकायां प्रथमपत्रं नैव विद्यते। पञ्चदशतमस्य पत्रस्य वामभागः कीटदंष्ट्रितोऽस्ति। एतस्मात्कारणान्मातृकेयमप्यपूर्णैव। किन्त्वत्रत्यः पाठोऽपि समीचीनपाठनिर्धारणे दोहदकल्पस्समजनि। अस्यां मातृकायां षट्सु सर्गेषु प्रतिसर्गं वर्णितविषयानुरूपं सर्गाभिधानं समधिकं महत्त्वाधायकं सञ्जातम् । तद्यथा–

'पौरजनरामविरहोक्तिकथनं 'नाम प्रथमः सर्गः।

'रघुनाथबाललीलावर्णनं 'नाम चतुर्थः सर्गः।

'अहल्यास्तुतिर्नाम' सप्तमः सर्गः ।

'धनुर्भङ्गो 'नामाष्टमः सर्गः ।

'रघुनाथविवाहो 'नामैकादशः सर्गः।

'रघुनाथायोध्याप्रवेशो' नाम द्वादशः सर्गः।

पाठभेददृष्ट्या गङ्गानाथझा–परिसरीया मातृका 'घ' संज्ञया संज्ञिता।

भण्डारकर–ओरिएण्टल–इस्टीट्यूट–पुण्यपत्तनतः सम्प्राप्ता मातृका नितरां कीटदंष्ट्रिता क्षतिग्रस्ता चेति। तस्मात्कारणादेतस्याः मातृकायाः छायाङ्कितपत्राण्यपि कुत्रचित्स्थलेषु नैव सन्ति सुपाठ्यानि। तथापि 'घ' मातृकासदृशमत्रापि पञ्चसर्गेषु प्रतिसर्गं वर्णितविषयानुरूपं सर्गाभिधानमुल्लिखितं विद्यते। 'ङ' स्थानीयेयं मातृकाऽपि समुचितपाठनिर्धारणे सहायिका सञ्जाता। यद्यपि इयमपि मातृका एकोनत्रिंशतितमस्य पत्रस्याभावादपूर्णैव विद्यते। कस्याञ्चिन्मातृकायां समधिगते ह्यधिकपाठे पत्रस्य लिपेर्विमृष्टत्वात्कीटदंष्ट्रत्वाच्च कुत्रचित्स्थलेषु प्रकोष्ठके स्वमतं स्थापयित्वा, कुत्रचिच्च शून्यानि दत्वा सम्पादनकार्यं मया निभालितम्।

सम्पादनेऽस्मिन् पाठभेदस्य स्पष्टप्रतिपत्यर्थं 'क' मातृकायाः सङ्केतः – Ujj

'ख' मातृकायाः सङ्केतः – I.O

'ग' मातृकायाः सङ्केतः – B.H.U.

'घ' मातृकायाः सङ्केतः – G.N.J.

'ङ' मातृकायाः सङ्केतः – Pu. क्रमेण प्रदर्शितो विद्यते।

उपर्युक्तपञ्चमातृकाणां साहाय्येन वर्षद्वयाभ्यन्तरमेव महाकाव्यमिदं मया सम्पादितम्, किन्तु श्रेयांसि बहुविघ्नानीतिकृत्वा कतिपयव्यवधानवशादिदानीं यावन्महाकाव्यमिदं प्रकाशितं भूत्वा विदुषां समक्षं नायातमितिहेतोः भृशञ्चेखिद्यतेस्म नश्चेतः।

साम्प्रतं डा० त्रिपाठिमहाशयानामेव शिष्यप्रवरैः परिसरेऽस्मिन् प्राचार्यपदमलङ्कुर्वद्भिः डॉ०प्रकाशपाण्डेयमहोदयैर्महाकाव्यमिदं विदुषां समक्षं प्राकाश्यमानीयते, अयमपि सुमहत्प्रमोदावसरः सुयोगश्चैतस्य ग्रन्थरत्नस्येतिकृत्वा संप्रति मोमुद्यतेऽस्मन्मनः। एतावता प्राचार्यमहाशयान् प्रति प्रणतिपुरस्सरमाधमर्ण्यं विभर्त्येष जनः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वकुलपतिचराणां ध्वन्यध्वन्यध्वनीनानां काव्यकान्तारकेसरीणा–मस्मद्गुरुकल्पानामभिराजविरुद्विभूषितानां प्रो० राजेन्द्रमिश्रमहाशयानां 'नान्दीवाक्' सीमन्तसिन्दूरवददसीयं प्रबन्धसौन्दर्यं प्रवर्द्धयत्यतितराम्। अतो प्रो० मिश्रमहाशयान् प्रति नतिततिभिः कार्त्तज्ञं व्याहरत्येष जनः।

विविधावदातविद्याविद्योतितान्तःकरणाःकाव्यसर्जन–समीक्षणविचक्षणाः प्रो० रहसविहारीद्विवेदिमहाशयाः

महाकाव्यमिदमाद्यन्तं पठित्वा प्रमुदितास्सन्तोऽस्मदीयामभ्यर्थनां स्वीकृत्य स्वनिर्मितैः शुभाशंसनपद्यजातैर्ग्रन्थरत्नमिदं सनाथीकृतवन्तः। अतस्तान् प्रति नतेन मूर्ध्ना कृतवेदितां विज्ञापयत्येषजनः। अन्ततश्चाक्षरसंयोजकं पृष्ठसज्जाकरञ्च सर्वश्रीब्रह्मानन्दमिश्रमहोदयसहितं वर्णविन्यासकरं श्रीओमप्रकाशशुक्लं प्रति कृतज्ञताभरैराशीराशिभिस्सभाजयत्येष जनः।

कानिचिदात्मनिवेदनपद्यानि यथा–

पूर्वाश्रमस्थस्य मुरारिनाम्नः संन्यासिनोऽद्वैतयतेः प्रणीतम्।
'श्रीराघवोल्लास' इति प्रसिद्धं काव्यं महद्रामचरित्रयुक्तम् ।।1।।

लब्धा मया रामकिशोरनाम्ना अस्याः कृतेः पाण्डुलिपिः सहर्षम्।
सम्पादितं सत्सुविभाति काव्यं मोमुद्यते मानसमस्मदीयम् ।।2।।

सम्पादनेऽस्मिन् यदि कुत्रचित्स्यात् त्रुटिर्मदीयाऽथ च मुद्रणस्य।
काव्यं पठन्तस्सुधियः समस्ताः क्षम्यन्तु दोषानिति मेऽभिलाषः।।3।।

यैः कैश्चिदन्यसुजनैरिह पूतयागे
दत्तानि संयतविचारहवींषि तेभ्यः।
झोपाह्व एष किल रामकिशोरशर्म्मा
स्वीयां समर्पयति नित्यनतिं समेभ्यः।।4।।

*'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः।*
*शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति'।।* इतिशम् ।।

मकरसङ्क्रान्तिः
खि० 2011

विदुषामाश्रवः
झोपाह्वो डॉ० रामकिशोरः
(विहारप्रान्तस्य मोदफलपुरवास्तव्यः)



# प्रथमः सर्गः

श्रीमहागणपतिर्जयति ।।

सिन्दूरपूरारुणवारणास्यो दास्योद्यतानां सकलार्थदाता
विघ्नाब्धिमज्जज्जनतावलम्बो लम्बोदरो मे हृदये सदाऽस्तु ।।1।।

वीणा प्रवीणा सततं यदीया करद्वयी कान्तिमयी विभाति।
सा शुद्धवेषा कुमुदप्रकाशा भाषा ममाशा परिपूरणेऽस्तु ।।2।।

[1]रघुनाथाभिधं ब्रह्म जिह्मभावविदारणम् ।
नमामि विततानन्त-भवभीतिनिवारणम् ।।3।।

[2]जयति हृदि मदीये सर्वदा रामकृष्णः
क्षयितविषयतृष्णः कृष्णपादैकधिष्ण्यः ।
शुचिगुणयतिवर्यः कार्यकर्त्तृप्रभेद -
प्रतिहतमतिरेष क्लेशहर्त्ताश्रितानाम् ।।4।।

तं नित्यं नमत द्विजा यतिवरं श्रीरामकृष्णाश्रमं
पूर्वस्मिन् विहितश्रमं विगमवाच्याचारयुज्याश्रमे ।
तुर्यस्थं समलङ्करोति मुनिता यं नग्नभालाग्निका[3]
मुक्तेर्मुण्डनमागलाच्च विमलं वाराणसीमण्डनम् ।।5।।

कुर्वन्तु चिन्तां चरणाम्बुजस्य श्रीरामकृष्णस्य निमेषमात्रम् ।
जाता अनन्ता इह सिद्धिभाजो [4]रामोदितज्ञानकला कुलाश्च।।6।।

रामकृष्ण-कथाप्रश्न-मात्रत्रासितपातकः।
गुरुः कल्पतरुः कोऽपि यतिर्जयति मुक्तिदः ।।7।।

---

1. रामचन्द्रा०, Ujj, B.H.U., Pu.
2. अधिकः पाठः, G.N.J.
3. ०म्बि०, G.N.J.
4. राजो०, G.N.J.

प्रेम्णा कृतौ चेतसि लोकवन्द्यौ पादौ गुरोरम्बुजरोचिषौ तौ।
अनेकजन्मार्जितपापपात्रं गात्रं पवित्रं कुरुतां मदीयम् ।।8।।

यस्याङ्घ्रिपद्मस्मृतितोऽपि लोकाः संसारशोकाद् बहवो विमुक्ताः।
तस्मिन् गुरौ संहृतसर्वतृष्णे श्रीरामकृष्णे विरते रतोऽस्मि।।9।।

चेतोभुवोऽपि कामस्य जयाय निजवैरिणः।
धृताकारं हरं वन्दे रामकृष्णं दिगम्बरम् ।।10।।

वासो यस्य निरन्तरं च विजने नो वैजनेऽस्मिन् रुचि-
वैराग्यैकरसः प्रपञ्चविरसः पापापवादेऽलसः।
पूर्त्तिं यान्ति यतः सतामपि मनः कामा अकामार्चित-
स्सोऽयं शङ्करपत्तने विजयते श्रीरामकृष्णो गुरुः ।।11।।

श्रीरामकृष्णयतिराजपद[1]-प्रसादात्संसादिताखिलमनोरथसिद्धिसिद्धः।
अद्वैतभिक्षुरिह दिक्षु गुणैः प्रतीतः काशीनिवासनिरतो विरतःप्रपञ्चात् ।।12।।

[2]स्मरता रामकृष्णौ चेद् रामकृष्णाङ्घ्रिपङ्कजम्।
प्राप्तं नैतद् विचित्रं हि तदीया स्थितिरीदृशी।।13।।

[3]वितृष्णः सर्वकामेभ्यो रामकृष्णो यतीश्वरः।
वरः सर्वगुणैः सेव्यो दिगम्बरवपुर्गुरुः।।14।।

उल्लासो राघवस्यान्तःश्रवणादेव जायते।
'राघवोल्लास' एवायं श्रोतव्यो रामतत्परैः ।।15।।

सुधीभिर्निर्धिरादेयः काव्यरूपोऽयमुज्ज्वलः।
रामभक्तिः स्फुरन्नर्थः स्वार्थदोऽतः प्रपद्यते।।16।।

भवानन्तमहाम्भोधौ पतितैः काव्यरूपिणी।
तरीर्गरीयसी सेव्या नव्या भव्या कृताधुना।।17।।

---

1. ०गुरु०, G.N.J.
2. अधिकः पाठः, Ujj.
3. आदर्शमातृकायां पद्यमिदं नास्ति।

रामचन्द्रपदद्वन्द्व-भक्तिवल्यैकजीवनम्।
भव्यैः सुसेव्यतां काव्यं सुधाधाराधराधरम् ।।18।।

श्रवणादस्य काव्यस्य न द्रवेद्यस्य मानसम्।
मया तु श्रूयते नासौ नरः सृष्टो विरञ्चिना।।19।।

काव्यं न चेदं किमु कोऽपि मन्त्रो लोके स्वतन्त्रोऽपि रघूत्तमोऽयम् ।
प्रयाति सद्यो वशतामशेष - दोषौघहन्ता पठतां जनानाम्[1]।।20।।

पुस्तकेऽधिगतेऽप्यत्र नाभ्यासं ये प्रकुर्वते।
रामस्य शपथास्त्रेभ्यः सभ्यभावाद्वदाम्यदः।।21।।

दत्वा दृशं रामपदारविन्दे कुर्यादमन्देन हृदाऽस्य पाठम् ।
कृते तथाऽसौ सुकृतेन युक्तः प्रायो भविष्यत्यपि रामभक्तः ।।22।।

नो कार्यमार्येषु बहुप्रवादैरदोविदोदारहृदाऽर्थऽयेहम् ।
यथा भवेदस्य जने प्रचारस्तथा विचारः कृतिभिर्विधेयः।।23।।

काव्यप्रचारे सततं विधेयं मनो घनोदारविचारसारैः ।
नो कार्यमालस्यममुत्र मित्रैर्भक्त्या पवित्रैः रघुनायकस्य ।।24।।

अयं मूढतया रूढो गूढेनान्तस्त्वयेरितः ।
श्रीराम! कुरुते काव्यं भव्यं वाऽभव्यमस्तु तत् ।।25।।

ध्रुवमुक्तिर्मदीयेयं नेति ज्ञेयं विचक्षणैः ।
वक्ता भक्तानुरक्तात्मा परमात्मा रघूत्तमः।।26।।

अनेकसम्भाषणजातपापा या चातितापा विरसा रसज्ञा।
श्रीरामनामामृतमन्तरेण नास्याः परं दोषहरं स्मरन्ति ।।27।।

तदेव पद्यं जगतां हि वन्द्यं सर्वैरनिन्द्यं मनसोऽतिहृद्यम्।
यद् रञ्जितं तापहरेण नाम्ना श्रीरामचन्द्राक्षरचुम्बितेन ।।28।।

सारवानपि निःसारः स श्लोकः शोककारणम् ।
नाङ्कितो रामचन्द्रस्य नाम्ना यः पापहारिणा।।29।।

---

1. स्मरतां नराणाम्, Ujj, Pu.

सुश्रान्तायास्तु विश्रान्तिर्भारत्या इयमेव हि।
रामचन्द्रयशोगङ्गा - तरङ्गान्तरखेलनम् ।।30।।

अद्यापि चेतः कुरु हा! विचारं संसारपारं यत एष्यसि त्वम् ।
ज्ञात्वाखिलं तद् विफलं फलाय प्रयोऽचलाय स्मर रामचन्द्रम्।।31।।

कथं मनस्त्वं कुरुषे समन्तात् परिभ्रमं विभ्रमहेतुभूतम्।
संसारकन्दोद्दलनेष्वमन्दं भजस्व रामस्य पदारविन्दम् ।।32।।

अव्यक्तशब्दावलिभावभेदं नेदं पदं यद्यपि सद्रसानाम् ।
वाक्यं मम प्रेमवतां सतां तत् शिशोरिवानन्दभरं करोतु।।33।।

जातानन्दसतां-वृन्दं गौरवमपि दास्यति।
राघवं स्मरतो हाऽद्य लाघवं क्व गमिष्यति? ।।34।।

रामचन्द्रः स्मृतः प्रेष्ठः श्रेष्ठः कर्मभिरागमे।
तस्मादप्यधिको दासः कृतायासः स्मृतावसौ।।35।।

पुण्यतः प्राप्यते साधुर्येन सिन्धुर्भवाभिधः।
तीर्यते जन्तुभिः सर्वैरतत्पूर्वैरपीरितम् ।।36।।

तदेव केवलं नेत्रं पवित्रं प्राणिनामिह।
कदापि जायते यस्य गोचरोऽनुचरो हरेः।।37।।

रामभक्तः पदेऽसक्तः किञ्च व्यक्तरुचिः स्मृतौ।
कुत्रचित् लभ्यते दैवान्नैवास्य सर्वतः स्थितिः।।38।।

तप्तानामिह सन्तापै र्भवदावसमुद्भवैः।
साधोरेवास्ति विश्रान्तिः शान्तिश्चापि हृदःपरा ।।39।।

अपारे पथि संसारे सञ्चारेण श्रमातुरैः ।
लभन्ते साधवः कैश्चिद् गुरवस्तरवःशिवाः ।।40.।।

[1]ब्रह्मणामिह शिष्टानां नान्तरं दृश्यते स्फुटम् ।
कल्याणं चिन्त्यते याभ्यामपूर्वं जगतामलम् ।।41।।

---

1. 'ब्रह्मणामि'त्यारभ्य 'पुरीष'मिति यावदधिकः पाठः, Ujj.

पवित्रानपवित्रान् ये सङ्गमनात्प्रकुर्वते ।
दुष्टाः विष्टासमाकाराः दूरात् त्याज्याः शरीरिभिः।।42।।

कफस्यापि च रेफस्य[1] समाना दृश्यते स्थितिः।
नायाति शान्तिर्मधुरैर्विधुरैरेव शाम्यति।।43।।

पुरीषं पुरुषो ज्ञेयो नानुनेयो दृशाप्यसौ।
उत्पन्नो जठरान्मातुः रामं जातु न यः स्मरेत्?।।44।।

नेक्षणीयं मुखं तत्तु रामनामपराङ्मुखम्।
जायते च यतो दुःखं सुखं नश्यति चोन्मुखम्।।45।।

नैवास्य कुन्देन्दु - गुणौघपारः पूर्णावतारः सुकृतैरुदारः।
चित्ते सदारः क्षणदा-प्रचारः प्रध्वस्तसारः स विभाति रामः ।।46।।

रामाङ्घ्रिसंशुद्धनखेन्दुलेश-संचिन्तनात्स्फूर्जति कोऽपि तोषः।
अंशोः सुधांशोरतिसङ्गतोऽस्ति नांशोऽपि तस्यावितथं वदामि।।47।।

[2]प्रायोऽमृतं तन्मृतमेव जाने नानेन कार्यं मम किञ्चिदस्ति।
श्रीरामनामामृतमेतदन्तः सता कृतं चेदमृतं करोति ।।48।।

[3]नो गोचरा अप्यमरा न रामे भवन्तु येषां हृदयं न रामे।
प्रायोऽस्तु रामेषु रतिः सरामे स्वापद्विरामे क्षणमन्तरा मे ।।49।।

अयुक्तमेतद् वचनं मदीयं श्रुत्वापि कोपो न भवेद् बुधेषु।
भाषाः शिशूनां न भवन्ति दोषा - वहा महासन्निवहा वदन्ति ।।50।।

सदा राममेकं मनश्चिन्तयालं
जगच्चञ्चलं चञ्चलावत्समस्तम् ।

---

1. निकृष्टप्रतिकृष्टावरेफयाप्यावमाधमाः।
   रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः।।
   – अमरकोशः, 3/54, 3/132

2. अधिकः पाठः G.N.J.

3. अधिकः पाठः G.N.J.

तदासक्तिरेषा विशेषाद विपत्यै
स्फुटं ते रटन्त्युत्कटं ज्ञा अटन्तः ।।51।।

त्वामर्थयेऽद्य रसने! व्यसनेषु सक्तां
नानारसारसनलालसतानुयुक्ताम् ।
सानन्दमेव सततं पठ रामनाम
श्रीरामरामरघुनायकराघवेति ।।52।।

नेयं वृथा नैव जनैरिहायुः शुभैः[1] शुभंयुर्भगवाननन्तः।
रामाभिधो यो हृदये विधेयो वेदाभिधेयो विनयोदयेन ।।53।।

[2]सर्वतः पर्वताकारा अपि सन्त्वंहसाम्भराः।
का नो भीतिः स्मृतिर्विष्णोर्वज्रवन्मानसे यदि?।।54।।

सत्यं वदामि रसने! व्यसनेष्वनिशं रते!।
कुरु रामाक्षरोद्घोषं नो चेद्दोषं वदाम्यहम् ।।55।।

मूर्खस्यापि मनः सद्यः करुणारससीकरैः।
सेचनादार्द्रतां याति ततस्तस्यैव कीर्त्तनम्।।56।।

कौशल्या विलसच्छल्या हृदि रामवियोगतः।
अपृच्छद् ब्राह्मणं वार्त्तामागतं रामसन्निधेः।।57।।

सा विप्रमूचेऽचलनेत्रमेघ - गलज्जलापूरितभूमिभागम्।
संसारभनूदिततापतप्तः विश्रामचन्द्रः क्व स रामचन्द्रः?।।58।।

पतिव्रता याऽतिवृता गुणानां गुणेन सीताऽतिनता कुलीना।
येनाजिभूमौ निहता अमित्राः किं हा सुमित्रातनयः करोति?।।59।।

सत्यं वदाशेषविशेषयुक्तं सक्तं गुरो! तत्र मनो मदीयम् ।
आर्त्तानपि श्रीरघुनाथवार्त्ता करोति चार्त्ताकुलचेतसः स्वान् ।।60।।

रघुनाथपदप्रेम - स्त्रवदस्त्रभरेक्षणम् ।
प्रेरितो वद देवेदं मन्दं मन्दं सतां वचः ।।61।।

---

1. शुचैः, B.H.U.
2. अधिकः पाठः, Ujj.

[1]स्मृतितो यस्य निर्यन्ति भवदुःखानि देहिनः।
ब्रह्मरूपस्य रामस्य कुतस्तान्यपि मायया?।।62।।

आज्ञां पितुः प्राप्य शनैः प्रयातः पथा धराधीशगतोचितेन ।
तं वीक्ष्य पौरैः स्त्रवदस्त्रपूरै र्हा! हा! रवो दुःखभरादकारि ।।63।।

त्यक्तः[2]सुभूषानिचयः कुतः स श्रीरामवस्त्राण्यपि होचितानि।
क्व यासि सीतासहितोऽभिषेके मुहूर्त्त एष प्रहितोऽन्यवेशः ।।64।।

माताजनानामियमद्य सीता पिताश्रिताशेषगुणस्त्वमेव ।
विनापराधं चरणे रतानां त्यागं कथं[3] हा! कुरुतः शिशूनाम्?।।65।।

हा! कोमलं पद्मदलादलं यत्तलं यदस्याम्बुजलोचनायाः।
क्वायं प्रचारः पुरतोऽप्यपारो स्पृशन्पुरौको हृदयं विचारः ।।66।।

दृष्ट्वाति-[4]हृष्टान्तरवक्त्रपद्मां पद्मासमानां तनयां धरायाः।
पत्या व्रजन्ती विपिनेषु वस्तुं न्यस्तं समस्तं सदनादिलोकैः ।।67।।

पाराः[5] परात्तापभराद् विमूढाः श्रीरामरूढाखिलचित्तवृत्ताः[6]।
मातर्निपेतुर्विधुरा धरायां विष्वक्स्त्रवत्स्वेदभराऽविलाङ्गा[7]।।68।।

[8]प्राणप्रिये श्रीरघुनन्दनेऽस्मिन् गन्तुं प्रवृत्ते पुरतोऽपि दूरे।
पेतुःशरीराणि पुरःस्थितानां मातर्जनानां विकलानि दुःखै ।।69।।

तथोत्थितास्ते सहसा कराभ्यामास्फालयन्तो जठरान्तराणि।
धूलीभराक्रान्तकचाः शुचार्त्ताः ऊचुश्च हा! राघव! राघवेति ।।70।।

---

1. अधिकः पाठः, G.N.J.
2. स्व०, B.H.U.
3. कुतो, Ujj, B.H.U.
4. ०दृ०, G.N.J.
5. परः परादुःख०, Ujj, G.N.J.
6. ०त्या, B.H.U.
7. ०जलाकुलाङ्गा, B.H.U.
8. अधिकः पाठः, G.N.J., Pu.

निकेतनं कान्तिलसल्लतायाः[1] दृष्टिङ्गता या न कदापि कस्य।
सा वीक्षिता तैर्युगपत्समस्तै र्ममज्ज लज्जाजलधौ हि सीता।।71।।

सीते ! वसन्ति विपिनेषु जनाः श्रयन्ते
नो दीर्घपद्मनयने! शयनेऽपि वाञ्छाम् ।
चैलान्नभोगजसुखे मनसापि लिप्सां
किञ्च त्रपामपि न किं सकलं श्रुतं ते?।।72।।

नायं त्रपायाः जलजाक्षि! कालो यामोऽद्य वामोरुयुगे! वनानि ।
सख्येव वाण्या रघुनन्दनस्य[2] साऽऽकर्षिता मन्दपदं जगाम ।।73।।

आरब्धमेतत्किमु देवदेव! नैवास्ति किञ्चित् त्वयि हा! विवेकः ।
श्रीरामचन्द्रः शुभवक्त्रचन्द्रः सञ्जीवनं सर्वपुरौकसानाम्[3]।।74।।

[4]श्रीरामचन्द्रस्य पदाब्जयुग्मं तिग्मांशुवंशोदधिसम्भवस्य।
नो दृश्यते चेद् वपुषः प्रयाणं प्राणाः विधातुं यतिमाचरन्ति ।।75।।

याऽऽकृतिः सुकृतिदैवतनम्या, दीर्घसुन्दरभुजायुगरम्या।
मेघ-मेचकरुचिर्गतसाम्या, सा कथं पुरजनेक्षणगम्या ? ।।76।।

सूर्यवंशतिलकालकशून्या, कामिनीव न कथं नगरी स्यात्? ।
स्वामिनि! त्वयि गतेऽखिलकाम-पूरकेऽमलयशश्श्रयरामे ।।77।।

माताजनानां जनकोऽसि[5] राम! त्वं जीवनं मूल्यघनं[6] धनञ्च।
त्वया विना किं रघुनाथ! कुर्मः शर्मप्रणेता न हि दृश्यतेऽन्यः ।।78।।

पूर्वं कृपासागरनागराणामनुक्तमेवाधिगतं हि दुःखम् ।
न ज्ञायते तत्कथमद्य वन्द्य-पादेन कोलाहलतोऽपि किञ्चत्?।।79।।

---

1. ०परम्परायाः, B.H.U., ० महल्लतायाः, Pu.
2. ० नायकस्य, G.N.J.
3. ० सां नः, B.H.U.
   ० सान्तः, G.N.J.
4. अधिकः पाठः, G.N.J., Pu.
5. ० कस्त्वमेव, G.N.J.
6. ० धनं घनञ्च, G.N.J.

साकेतजाता जनता-लताहा! नानाप्रतानैर्विततता समन्तात् ।
यातोऽधुना राधवकल्पवृक्षो दक्षो [1]विनाधारमधः प्रयातु।।80।।

पूर्णः कलाभिः शुचिरामचन्द्रः सान्द्रोऽन्तराले प्रियताभरेण[2] ।
कुत्रापि याति प्रविहाय हाऽद्य कः स्यादयोध्यानिश ईश! ईश? ।।81।।

साकेत! हा! केतकगौरकीर्त्तिः श्रीरामचन्द्रेशवियोगभाजि! ।
व्यक्तिर्भविष्यत्यधुनैव पङ्क्तेस्त्वय्याधिसंसूचकलक्षणानाम् ।।82।।

लोकैरयोध्ये! वसतिर्न मध्ये योग्या विधातुं विपुले त्वदीये ।
त्यक्ते मनोरञ्जनचञ्चुरेण रामेण विश्राम-निकेतनेन ।।83।।

नाथो गतः श्रीरघुनाथ एष प्रायो ह्यनाथो भाविताऽद्य लोकः।
तथासति त्राणकरः परः को भवेदमुष्यात्र च दुर्गमस्य?।।84।।

प्रायः पुरीयं विधवेव नारी शारीरशोभारहिता दुरन्ता।
न दृश्यते चेत् प्रचुरप्रकाशो श्रीरामकण्ठाभरणं वरेण्यम् ।।85।।

कैर्वा विधेया जनदृक्चकोरै र्हा! पारणा क्षुध्-परिवारणाय?।
नो [3]सन्तिः शीता निकराः कराणां श्रीरामचन्द्रानन[4]-चन्द्रजाताः ।।86।।

याते दिगन्तं रघुनाथभानौ नानौचितीर्दैन्यतमः प्रचारे।
उलूकवत् पापचयाः प्रयातुं समं ततो यत्नमपि श्रयन्तु ।।87।।

[5]रामे गते पुण्यरते वनान्ते स्वापत् कृतान्तेऽम्बुजलोचनान्ते ।
कामातिकान्ते मुनितोऽपि दान्ते हा! हा! निजान्तेऽनुगते गतिः का?।।88।।

दृष्टे महापुण्यचयेन दृष्टे ये वाऽप्यदृष्टेन कृतोदयेन ।
श्रीरामचन्द्रस्य पदारविन्दे श्रियाऽप्यमन्दे क्व च तेऽद्य यातः?।।89।।

---

1. गताधारहता कमेतु, G.N.J.
2. ० रसेन, G.N.J.
3. जीवनाश्चारुकरप्रचाराः, G.N.J., शीतलाः सन्ति करोत्करास्ते, Pu.
4. ० मल० G.N.J.
5. 'रामे गते' इत्यारभ्य 'कुर्वन्तु रोगाः' पर्यन्तमधिकः पाठः, Ujj.

अस्मन्महानन्दसमुद्रभङ्ग-प्रोद्दात्तरङ्गोदयकारणं यः ।
श्रीरामचन्द्राननचन्द्र एष क्लेशैकहर्त्ता भवतोऽवतान्नः ।।90।।

श्रीरामचन्द्रैष करो वरस्ते सरोजपत्रादपि शीतलान्तः।
दानेऽभयानां कुशलोऽमलस्तं निधेहि मौलौ भृशतापितानाम् ।।91।।

नेत्रं सुधासाररसस्य जैत्रं यच्चातिचित्रं करुणाकटाक्षैः।
तत्प्रेरयास्मासु सरोजमित्रं श्रीरामगात्रं भविताशपात्रम् ।।92।।

कुर्वन्तु रोगा अधुनैव योगान् भोगायनेषु स्वकलेवरेषु।
गच्छत्यसौ पूरितलोककामः कुत्रापि रामः प्रविहाय सर्वान् ।।93।।

दुःख! त्वदीयं फलितं तपोऽद्य त्वद्द्वारको गच्छति रामचन्द्रः।
वर्गं तदीयं सकलं निसर्ग[1]-संसर्गदीनं विकलीकुरुष्व ।।94।।

[2]एतान् जनान् राघव! तावकीनान् बालानिवाबालविपद्धिमग्नान्।
आलोक्य किञ्चित्करुणारुणाक्ष ! नोदेति चित्रे महदद्भुतं तत् ।।95।।

तुण्डं त्वदीयं रघुनाथ! कुण्डं सत्यं सुधायाः परिभावयामः[3]।
जातेयमस्माद् वचनप्रणाली प्रायः सुधा लीनतरा विभाति ।।96।।

हा! हा! न रामेण जगत्सु कश्चिद् दृष्टः श्रुतो वापि पुमान् समानः।
यस्येक्षणादेव जनाः क्षणानां क्षणादहो यान्ति हि भाजनत्वम् ।।97।।

धरासुरास्तेन पुरा पुरारि - प्रेष्ठेन रामेण समर्पितेष्टैः ।
कदाप्यदृष्टे हृदये कुरुष्व चित्तेऽधुना वासमिति प्रणेदुः।।98।।

[4]भवत्पदाम्भोरुहमात्रजीवाः भूदेवदेवाः विमलस्वभावाः।
त्यागाय योग्या रघुनाथ! नैव निःसीमदैवप्रतिमास्पदस्य।।99।।

अत्रापि चित्राचरणात्सुरेन्द्रात् श्रीरामचन्द्रात्करुणासमुद्रात् ।
सम्प्राप्यते कल्पितमेव सर्वैःकुर्वन्तु किं दैवहता इदानीम्?।।100।।

---

1. वियोग-संयोग०, Ujj, B.H.U.
2. अधिकः पाठः, Ujj, B.H.U.
3. परिलोक०, Ujj, B.H.U.
4. अधिकः पाठः, Ujj, B.H.U.

नैवार्थनायां कुशलाः कथञ्चिद् विना विदेहेशसुताधिपत्वम्।
कर्माणि धर्मा अपि ये स्वकीयाः न स्यात्तदीयाकृतिरीश! कस्मात्?।।101।।

[1]धिक् तं नरं लोकवरं विहाय रामं परं दैन्यहरं करं यः ।
करोति किञ्चिद् विततञ्च किञ्चित्युक्तम्वरे प्राणहरेऽपि काले[2]।।102।।

दैन्यदावदहने प्रगतेऽस्मिन् सूर्यवंशतिलके किलकेन।
शक्यतेऽघनगरेऽपि च वस्तुं तद् वदन्तु सुधियो विधिहीनात् ।।103।।

शरीरपातो भवतादतो नो स्यात्कोऽपि घातो भवतोऽनुगस्य।
कुर्वीत किं राधव! तावकीनः श्रिया विहीनोऽपि परेषु याञ्च्याम्?।।104।।

अप्रार्थितान्येव सदा ददासि त्वं ब्राह्मणेभ्यो द्रविणानि राम!।
नेयं ततः प्रार्थनकर्मविज्ञा हा! हा! रसज्ञा किमहो विधेयम्?।।105।।

नोच्चारितं रामवचः कदाचिदस्माभिराशावशचित्तवृत्त्या।
उच्चारणीयं कथमक्षदक्ष-शिक्षागुरो! शिक्षय दीक्षितान् तत् ।।106।।

कृता न किञ्चित्सुरतोऽपि काचित्कदाचिदाशा यत एव नाशाः।
स्थिते त्वयि स्वामिनि राम! पूर्वं सर्वाङ्कषा सा कथमद्य कार्या?।।107।।

भूदेववृन्दं पुरतोप्यमन्दं कन्दं महानन्दलसल्लतायाः।
प्रोवाच रामं करुणोपपन्नं खिन्नं शुचा किं करणीयमद्य ?।।108।।

रामाभिरामामलकीर्त्तिजालात्कालोऽपि भीतिं भवतः प्रयाति।
द्विजाः निजाङ्घ्रिस्मृतिसक्तचित्ताः वित्ताशया कं पुरुषं प्रयान्तु ?।।109।।

विद्याऽनवद्यापि गणो गुणानां साम्यं तृणानामधुना प्रयातु।
तद् ग्राहकोऽसौ जलजायताक्षः कलासु दक्षः क्वचिदेति रामः।।110।।

किं त्वां निवेद्यं जगदन्तरस्थं तज्जानकीजीवनदीनबन्धो!।
सम्पद्भरेणाश्रितभूरिगर्वं सङ्गच्छतो दुःखमुदेति यन्मे।।111।।

---

1. अधिकः पाठः, Ujj, B.H.U.
2. ० त्स्वप्रार्थने स्वोदरपूरणाय, G.N.J., Pu.

शल्यं न कल्यन्तक! राघवैतत् शस्त्रं महत् किन्तु समाननोक्तिः।
अस्त्यस्य पीडाशमकोऽपि [1]जायुर्नायुः प्रणाशादपरः परोऽस्याः।।112।।

लक्ष्मीमदोन्मत्तसदःप्रयाणात्प्राणप्रयाणं वरमेव मन्ये।
नो तत्र लब्धिर्व्यसनावलीनामन्यत्र राम! प्रचुरत्वमस्याः ।।113।।

कृतान्तगेहान्तरभूमिपद्या वन्द्यातिनिन्द्या धनमत्तधाम्नः।
बाधा विवेकादिह दण्डजाता तातात्र नैव रघुनाथरीतिः ।।114।।

उत्तुङ्गासनसङ्गता अहमधःसम्प्राप्तभाग्योदया
मानात्केचिदुदानना अपि पुरः पश्यन्ति नैव स्थितम् ।
आशीर्वादशतेऽर्पितेऽपि वचनं नो निःसरन्त्यानना-
देवं राघव! लाघवं तव जने लज्जा तवैवेशितुः।।115।।

जनक-कनकसङ्गप्रापिताऽखर्वगर्व-
क्षितिपतिमुखवीक्षा-पक्षपातो ममाक्ष्णः।
न भवतु भवदङ्घ्रिद्वन्द्वबुद्धेः कदाचि-
दिह मतिनतिपूर्वं प्रार्थये त्वां दयालुम्।।116।।

दीनेऽनुकम्पा यदि तावकीना कीनाशपाशावलिनाशकेन।
एकं त्वया राधव! मे निवार्यं यत्प्रार्थनान्यं भवतः पदाब्जात्।।117।।

श्रोतव्यं रघुनाथनाथवचनं श्राव्यं यदि स्यादिदं
याताश्चेदसवः प्रयान्तु सुखतः का नाम हानिस्ततः?।
दासोऽयं जगदीश्वरस्य भवतो म्लानं विधायाननं
कस्याग्रेऽप्यधृतत्रपः किमु वदेद् देहीति दीनं वचः?।।118।।

प्राप्तुमिच्छसि मनो यदि सर्वान् दुर्लभानपि सुरैर्विषयौघान्।
तद् भजस्व भरताग्राजमेकं किं वृथा तनुभृतां भजनेन?।।119।।

मम पिता न हिताकुलमानसः सुखततेर्जननी जननी न मे।
मयि दया हृदयादपि ते गता रघुपतेऽनुपते! दयमद्य कम्?।।120।।

---

1. जायुर्जीवनौषधमित्यादर्शमातृका स्पष्टयति।

माता यदा भवति कोपयुता तनूजे
तातस्तदा व्रजति तस्य शरण्यभावम्।
सोऽप्याश्रयेद् यदि तथा कठिनं स्वभावं
कं यातु राम ! शरणं बत बालकोऽयम्? ।।121।।

जानकी जननि! मे जनकोऽयं नार्थ्यते मम कृते कथमेषः?।
प्रायशो नरवरा हि धरायां सम्प्रयान्ति वशतां वनितानाम् ।।122।।

कृत्यं न मातर्जनकात्मजेऽस्य रामस्य दीनेऽपि च निर्दयस्य।
दयावती त्वं जननी मदीया तातोज्झितं पालय बालमेनम् ।।123।।

मातर्जानकि! सन्तु ते च पितरः श्रीरामचन्द्रो भृशं
काठिन्यावृतचेतसो जगति सा पुंसां प्रसिद्धा स्थितिः।
माता यातु मृणालनालमृदुलस्वान्ता कृतान्ताकृति-
र्जाता त्वं मयि बालकेऽद्भुतमिदं दृष्टं न वा न श्रुतम् ।।124।।

त्यक्त्वा समस्तं शरणं प्रयातं राम! त्वदीयं चरणाम्बुजातम् ।
गलज्जलाक्षं गतसर्वपक्षं मां वीक्ष्य नायाति कथं दया ते? ।।125।।

एकान्ते प्रकरोमि दुःखदलितो हा! रोदनं सम्पत-
न्नेत्राम्बुप्रसरप्रसर्पणपरिक्लिन्नान्तवक्षःस्थलम् ।
कोऽपि स्वोऽपि परोऽपि नेति पुरतो दीनस्य मे सान्त्वने
कारुण्यं समुदेति नो रघुपते! वज्राधिकं ते मनः।।126।।

नैवास्ति सेयं रघुनाथदृष्टिःसृष्टिर्यतः कापि सुखोदयानाम् ।
दुःखाम्बुराशेर्भविता च पुष्टिः सृष्टिर्विधेः काऽप्यसतां विधेया?।।127।।

लीलाऽतिलोलाः सकलाः शृगालाःव्यालाश्च ये केऽपि च दुष्टशीलाः।
आनन्दमायान्तु पुरे विनाऽमुं रामं निकामं विपिनेन तुल्ये।।128।।

अकारि पुण्यं नयनैरपूर्णं ब्रह्मावतीर्णं रघुनाथरूपम् ।
नालोक्यते सून्नतपक्ष्मपङ्क्ति-र्व्यक्तिर्यतः [1]कापि सुखोदयानाम् ।।129।।

---

1. स्यात्सुखसन्ततीनाम्, G.N.J, Pu.

दैवं धृताकारमपारमेष श्रीरामचन्द्रो न विचारणात्र।
[1]विना घनानन्दकरेण तेन सौभाग्यलेशोऽपि [2]सहाखिलानाम् ।।130।।

रामोल्लसत्-श्रीमुखचारुचन्द्रमालोक्य सञ्जातमहामुदो नः।
को वा वदिष्यत्यधुनाऽतितुष्टः स्वकीयमिष्टं प्रवदन्तु लोकाः?।।131।।

दत्वा दृशं श्रीवदनारविन्दे केऽप्यूचुरुच्चैः करुणस्वरेण।
अस्माकमासादितपातकानां रामाद्य को दास्यति वाञ्छितार्थान्?।।132।।

कं हाऽधुना राम! निकामतप्ताः पूर्वं प्रगुप्ताः शिशुवत् त्वया ये।
यामः सुदीनाः शरणं शरण्यं त्राता भवेद् यः शरणागतानाम्?।।133।।

रामानुभूतं सकलैरनेकं साकं सदा [3]कं भवता पुरे यैः।
क्षणो[4] क्षणानामिह भक्षणं नः कालः करिष्यत्यधुना विना त्वाम् ।।134।।

जन्मान्तरेऽस्माभिरपातिवज्रं कस्यापि साधोः [5]सहसाऽनुमौलौ।
तस्याप्यनन्तं फलमीश्वरेण समर्पितं कारणमत्र नान्यत्।।135।।

त्वज्जीवनाःराम! जनाःपुरस्थाः दुःस्थाः वियोगाद् भवतः समस्ताः।
देहेषु तेषां यदि कापि पीडा व्रीडानिदानं न कथं तव स्यात्?।।136।।

अधिष्ठितं [6]तच्चरणाम्बुजेन रामस्य भाग्योदयकारणेन।
तदैव भद्रासन! ते यथार्थं नामाधुना जातमिदं गतार्थम्।।137।।

राम! सामवचनैर्मधुरैस्तैः क्षालितैरिव सुधासलिलेन।
[7]किं करोषि न निवारणमन्तः-कारणस्य पितृवद् वृजिनानाम्?।।138।।

---

1. गतो, Ujj,
2. सह प्रयाति, G.N.J, Pu.
3. कं = सुखमिति Ujj मातृका स्पष्टयति।
4. ०णे, B.H.U.
5. सहसा हि, Pu.
6. स० Ujj.
7. कः करिष्यति, G.N.J., Pu.

श्रीरामचन्द्रे नृपतौ जनानां सिद्धिर्भवित्री किल कामनानाम्।
आशा विनाशाय कथं प्रवृत्तः [1]सद्वन्द्यवृत्तः प्रथितः [2]पृथिव्याम् ?।।139।।

नित्यैरनित्यैर्निजगेहकृत्यैर्वयं सदा सम्भृतभूरिखेदाः ।
जना विना राममिमे सरामाः कथं व्रजेयुर्विवशाः सुशान्तिम् ?।।140।।

गृह्णातु नो राज्यमसौ तथैव पुरान्तरे तिष्ठतु रामचन्द्रः।
आलोकनादेव वयं विपापाः निर्यातितापाश्च भृशं भवामः।।141।।

त्वत्पादयोगात्सततञ्च भोगाः भुक्ता अनेके नगरीनिवासैः।
रामातुराः दीनतराः नरास्ते कथं सदाराः न धराधराः स्युः?।।142।।

त्वं रामचन्द्र! प्रियतासमुद्रः सम्पूर्णचन्द्रामलकीर्त्तिजालः।
त्वज्जीवनानां शरणागतानां त्यागं जनानां कथमादधासि?।।143।।

दूरे गते श्रीरघुनाथवीरे हीरे नृपाणां रणरङ्गधीरे ।
भवेदयोध्याऽद्य सुखेन योध्या किञ्चापि वध्याः स्युरिमे सपत्नैः।।144।।

हा! हा! गते दूरतरे नृपेन्द्रे प्राणाधिकप्रेयसि रामचन्द्रे।
कथं भवेज्जीवनमातुराणां विनाऽमुना नन्वधुना नराणाम्?।।145।।

रामः परं प्राणसमः समानां नूनं जनानां सरसीरुहाक्षः।
तस्मिन् प्रयातेऽद्य च दूरदेशे कथं न नाशे वपुषोऽधिकारः? ।।146।।

अपारकर्णज्वरहारकाणि किञ्चातिपापोच्चयमारकाणि[3]।
अनेकतोषोदयकारकाणि वाक्यानि रामोद्गिर हाऽपराणि।।147।।

पूर्वं भवत्पादसमाश्रयेण रामोदिताहङ्कृतिमूढचित्तैः ।
अस्माभिरेतैः सकलैरमानि कालोऽपि बालोचितकर्मपात्रम् ।।148।।

त्यक्तास्त्वया राघवनायकेन सर्वे वयं दीनतरा इदानीम्।
कथं भवेयु र्न पराभिघात-शतस्य पात्राण्यनिशं त्वदीयाः?।।149।।

घातः पितश्चेज्जनतासु कोपो [4]रोपानुरोपो हृदये विधेयः।
नायं मनोहारि मुखारविन्दः सन्तोषकन्दः क्व च रामचन्द्रः?।।150।।

---

1. सन्मान्य०, G.N.J., Pu.
2. ०स्त्रिलोक्याम्, G.N.J., Pu.
3. कारणानि, B.H.U.,
4. रोपः = शरः, Ujj मातृका स्पष्टयति।

नालस्यं पाकरणे [1]रामास्ति मम सर्वदा।
नालस्यं पापहरणे [2]तवास्य शरणेऽपि च ।।151।।

एवं स्वनानाजनताप्रयुक्ता वाचोऽतिसिक्ताःकरुणारसैश्च।
नासौ दयावानपि रामचन्द्रः शुश्राव हेतुर्न विधेरिहान्यः ।।152।।

कस्मै विभो राम! निवेदनीयो यो वेदनीयो[3] भविताऽद्य भारः?।
को वाऽक्षयं नेष्यति तं च भर्त्ता पेतुस्तथार्त्ताः प्ररुदन्त एते ।।153।।

नालोकितं चेद् वदनारविन्दं वृन्दं श्रियां राम! तव क्षणार्द्धम् ।
अभूत्तदा प्राणकुलं जनानां दुःखाकुलं किं न व्रजेत्तदद्य?।।154।।

भूषावली मौलिमणेर्गणेन श्रीमद्गुणानामतिमात्रबद्धाः।
शक्ता न गन्तुं पदमद्य लोकाः शोकाकुलाः कं शरणं व्रजेयुः ?।।155।।

अलङ्कृतौ भूवलयस्य रामे दुर्दैवतोऽद्यैव तु गन्तुकामे।
आधारतामेषिधरे नराणां त्वदुःखितानां [4]तव कोऽवलम्बः?।।156।।

यन्नाम सर्वजनपापतमःप्रचार-
संहारकारणमसौ रघुनाथसूरः।
संसारवारिपरिपोषणदक्षभानुः
क्वानु प्रयात्यहह! तान् सहसा विहाय।।157।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजका-*
*चार्यवर्यदिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपाद-*
*शिष्याद्वैतविरचिते 'पौरजनरामविरहोक्तिकथनं[5]' नाम प्रथमः सर्गः।।*



---

1. भरणे जठरस्य मे, Pu,
2. शरणे चास्य राम! ते, Ujj,
   शरणे राम! चास्य ते, B.H.U.
3. वेदनासम्वन्धी वेदनीय इत्यादर्शमातृका स्पष्टयति।
4. न तवास्ति कश्चित्, G.N.J, Pu.
5. अधिकः पाठः, G.N.J., Pu.

# द्वितीयः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ।।1।।

रुचिरवदनपद्मः सद्म पद्मालयायाः
कनककपिशवासा देहभासाञ्चिताशः।
शतमखमुखदेवा यस्य सेवास्तभावा
अधिगतविभवा हा! राघवः साधवः क्व[1]?।।2।।

शृण्वन्तु लोका यदि वोऽतिरेकात्कुर्वन्ति शोकाद् [2]रुजमन्तराले ।
आदौ हि पादौ रघुनन्दनस्य वियोगिभिश्चेतसि चिन्तनीयौ[3] ।।3।।

हरन्त एते विमलच्छवीभिः शोभान्तताकारतुषारभानोः।
यत्रातितापात्परिहृत्य दूरे नखाः सुखानां रचयन्ति वृद्धिम् ।।4।।
(युग्मकम्)

एतौ हि पोतौ विहितौ समेतौ गरीयसा केन च तेजसाऽपि।
यातुं महासंसृतिसिन्धुपारं शरीरिणां दैवनिरीक्षितानाम्।।5।।

इन्द्रोऽप्यतन्द्रो यदि वर्षपूगान्करोतु तीव्राचरणैस्तपांसि।
प्राप्तुं न शक्यानि [4]तथापि तेन सत्सङ्गपुण्यानि सखे! रजांसि।।6।।

जयन्त्यलं मङ्गल-मङ्गलानि सर्वाधिपत्यागमसूचकानि।
ध्वजोर्ध्वरेखा[5]र्पविपङ्कजानां तलेऽमले यस्य च लाञ्छनानि।।7।।

---

1. सः, Ujj, Pu.
2. हृदयेऽवकाशम्, Ujj, Pu.
3. वियोगिनोऽन्तः परिचिन्तयन्तु, G.N.J, Pu.
4. कदा०, G.N.J., Pu.
5. परि०, G.N.J.

याभ्यां प्रवृत्ता स्मृतिधूतचित्ता गङ्गामलाङ्गावलिशोधनाय।
एवं पुराणेष्वपि चक्रपाणेः कीर्त्तिः समस्तेष्वमला प्रसिद्धा।।8।।

याभ्यामहल्या चरणेन तुल्या कुल्यापि नारी न ययास्ति लोके।
शापेन या पत्युरभूच्छिला सा कृताऽमला साक्षिकुलं मुनीनाम् ।।9।।

ऊरुद्वयं शत्रुभयङ्करस्य सीताऽधिराजस्य विचिन्तनीयम्।
मनोहरं पीनतरान्तरं तत्पूर्वानुसारेण पुनः सुवृत्तम् ।।10।।

सदा हृदा भूमिसुताधिपस्य जङ्घायुगं चारुतरं स्मरामि।
सेवापरश्रीकरकान्तभूषा-माणिक्यमालारुचिरोचितान्तम्।।11।।

ततः कथञ्चित् शनकैरवाजीद् दृष्टिर्वरिष्टं सहजप्रभाभिः।
तटङ्कटेर्यन्निकटे मणीनां गणैर्वरेण्यापि न भाति काञ्ची।।12।।

स्थातव्यमद्य प्रविचार्य चित्ते यत्नेन सङ्गो बहुधा दुरापः।
यत्पादलब्ध्यै मुनिभिः समस्तं न्यस्तं कुतस्तं पतिमाश्रयामः?।।13।।

चन्द्रानना या जनकस्य पुत्री नूनं सवित्री जगतामियं श्रीः।
नारायणस्त्राणपरायणोऽयं रामः स्मरामः सततं तमेव ।।14।।

अनेकरत्नाञ्चितचारुकाञ्ची स्फुरन्मरीचिप्रभयाऽप्रमेया।
श्रोणिश्च शोणान्तविलोचनस्य ध्येयाऽपनेया हृदि याऽशुगेव ।।15।।

वक्षोऽपि रक्षो-दवपावकस्य श्रीरामचन्द्रस्य विचिन्तनीयम् ।
विमुक्तमुक्तामणिचारुहारं हारं विशालं कमलालयो यत् ।।16।।

गलोऽमलश्यामलकान्तिभाजो रामस्य नित्यं हृदि वर्त्ततां नः[1]।
यत्राविमुक्ता विलसन्ति मुक्ता सिक्ता जलेनाञ्जनमिश्रितेन ।।17।।

आजानुदीर्घौ रघुनाथहस्तौ[2] ध्येयौ प्रशस्तौ परितः प्रभाभिः।
रत्नाङ्गुलीयावलिशोभमान- पर्वाऽङ्गुली [3]सुन्दरपाणिपाली ।।18।।

---

1. वः, Pu.
2. रघुनन्दनस्य हस्तौ प्र० G.N.J.
3. पर्वोऽङ्गुलीशोभन०, G.N.J.

माणिक्यमालाकुलकङ्कणाली रत्नाङ्गदालिङ्गितमध्यभागौ ।
सेवारतानां शरणेऽतिदक्षौ [1]रक्षोऽनिलोद्भक्षणतक्षकाभौ ।।19।।

लसन्ति यत्राङ्गदसङ्गतानि नूत्नानि रत्नानि शिरःप्रदेशे।
विषं द्विषन्नाशकतानुमेयं जाने भुजावस्य भुजङ्गराजौ ।।20।।

फुल्लाब्जनेत्रं रदरत्नचित्रं मित्रञ्च सम्पूर्णसुधाकरस्य[2]।
[3]लावण्यसिन्धोः रघुनायकस्य मुखं सुखस्याधिगमाय चिन्त्यम् ।।21।।

कारुण्यमञ्जुलदृगञ्चलशोभमान-
मानन्दकन्दहसितोल्लसितं प्रसन्नम् ।
रत्नोज्ज्वलत्कनककुण्डलमण्डितान्तं
कान्तं मुखं स्फुरतु मे हृदि राघवस्य ।।22।।

भालस्य रामस्य विशालभावो युक्तः[4] कृतोऽयं चतुरेण धात्रा ।
नैवान्यथा स्यादिह[5] भाग्यपङ्क्ति-प्रद्योतिवर्णावलिसन्निवेशः।।23।।

संशोमतेऽङ्गरघुनाथशिरः पुरस्ता-
दव्यस्तशस्तमणिचित्रकिरीटयुक्तम् ।
भक्तार्पितामलसुगन्धिमनोज्ञमाल्य -
मालाऽनुसक्तकलगुञ्जितभृङ्गवृन्दम् ।।24।।

कदाचिद् राघवः कुर्वद् राजकृत्यानि भूरिशः।
निद्रार्थमर्थितो रात्रौ स्मर्त्तव्यः सुखमिच्छता।।25।।

कार्याण्यार्यजनेच्छितानि भवता नीतानि सम्पूर्णतां
शत्रूणां निवहा हताश्च बहवो देवाः कृताः सोत्सवाः।
चिन्ता यत्स्मरणात् प्रयाति विलयं का तस्य चिन्ता पुन-
र्निद्राङ्गारमपारशोभमधुना रामाङ्घ्रियोगात्कुरु ।।26।।

---

1. रक्षोऽनिलप्राशक०, Ujj, B.H.U.
2. ० निशाकरस्य, Ujj, B.H.U.
3. सौन्दर्य०, Ujj, B.H.U.
4. सम्यक्, G.N.J., Pu.
5. ० दिति, Ujj, ० दति०, Pu.

विश्वाधीश्वरपुण्यपावनपदप्रेक्षाव्यपेक्षा बुधाः
जाताः केऽपि च मूकपङ्गुबधिराः दीना अदीनाः कृताः।
स्वामिन्! भूरितराः धराधिपवर! श्रीराम! रात्रिर्गता
निद्रायै समयो नयोचितकृते देयो दयोदन्वता ।।27।।

श्रीमद्राम! गुणौघधाम! भवताम्विश्रामभूमीरुह -
स्त्वत्पादाम्बुजदत्तचित्तगतयः संयुक्तपाणिद्वयाः।
तिष्ठन्त्यन्तरतोऽम्बरस्य विधिना साकं च नाकेश्वराः
दत्ताज्ञा नयनाञ्चलेन कृपया गच्छन्त्यमी स्वालयम् ।।28।।

शेषाङ्गादतिकोमलातिविमला शय्याप्रसूनाञ्चिता
गेहे चित्रमणिप्रसङ्गरुचिरस्तम्भावली मञ्जुले।
श्रीमत्पादविलोकनोत्सुकमनो भूमीभवा कल्पिता
स्वीयेनैव कराम्बुजेन हि दयासिन्धो! विधेया दया ।।29।।

कुर्मः शर्मशतप्रदाय भवते श्रीरामचन्द्रप्रभो!
तुभ्यं भूमितले निधाय च शिरः सर्वे पुरः प्रार्थनाम् ।
कालोक्तं किल कर्म-धर्मपतिना कार्यं विचार्यार्थतो
वेदानां हृदयं कुरुष्व सदयं चेतोऽद्य निद्राविधौ ।।30।।

त्यक्तेयं भवता जगज्जनिकृता वन्द्यातिवन्द्याङ्घ्रिणा
श्रीरामप्रमुराजराजगुरुणा निद्राविनिद्रादिना।
तस्या अद्य करोतु को नु सुकृती हा! स्वीकृतिं भूतले
रामो जातहसः स्वदासवचनात्सिंहासनादुत्थितः।।31।।

मौलौ भाग्यवता [1]निधाय पुरतो ये तिष्ठता पादुके
देवानामधिपेन तेन पदयोरग्रे कृते तत्क्षणे।
ते चागण्यमणिप्रपञ्चविलसत्कान्ती जगत्स्वामिना
नीते ब्रह्मसुदुर्लभाङ्घ्रिकमलस्पर्शाज्जगत्पूज्यताम् ।।32।।

एवं राजकिरीटकोटिघटितश्रीमत्पदाम्भोरुहो
राजाऽसौ जगतां कृतार्थनविधिर्दासैः प्रयासैरलम् ।

---

1. वि०, Ujj,

दत्वाऽऽज्ञां गमने स्वकीयसदने संसेविनां पाणिना
मन्दं मन्दमुपागमद् गजगतिः सीतापतिः स्वालयम् ।।33।।

कालेऽस्मिन् धरणीतलेऽपि च नभोदेशे विशेषेऽलसत्
वाद्यध्वानपुरःसरं नरवराः विद्याधराश्चामराः।
क्षोणीपालविशालभालतिलकश्रीराम! देयं पुरो
मन्दं मन्दमिदं पदं जय जयेत्यूचुस्तदग्रेऽमराः[1] ।।34।।

आयान्तं निकटे निरीक्ष्य दयितं श्रीरामचन्द्रं मिल-
च्चेतः कैरवकोशपोषणकरं प्रोद्यत्करं निर्मलम् ।
देयं देवपदं बलादतिबलादेवं वदन्ती पुरः
सीता सत्वरमग्रतोऽपि सहसा गत्वानयन्मञ्चकम् ।।35।।

[2]सगर्वमुद्धतरसेन चुम्बिता लोलकुण्डलकपोलमण्डले।
सीतया स्मरशरातिभीतयाऽऽलिङ्गतो रघुपतिः स मे गतिः।।36।।

[3]समुद्यतस्ते वसनासनोऽस्तु मनोऽन्तराले जलदालिनीलः।
सीतोन्नतोरोजसरोजकोष-सञ्जाततोषाऽ चलनेत्रभृङ्गः।।37।।

सुप्तं गुप्तकृतिं सदा सुकृतिनां मञ्चे प्रपञ्चान्विते[4]
चन्द्रांशूज्ज्वलचेलसम्वृततले मुक्तावितानाकुले।
पादाम्भोजविमर्द्दनार्पितकरश्रीजानकीसस्मित-
श्रीमद्वक्त्रसरोजलोलनयनं रामं सकामं भजे ।।38।।

चित्रं मित्रकुलप्रदीपपरमं लोके तदाकर्णय
भक्तोपेक्षमपेक्षते कविकुलप्रेमाकुलं सेवके।
एवं वक्रदृशोर्निशम्य वचनं भूमीभुवो राघवो
दीनस्मेरविकस्वराधरदलो[illegible]जाकुलोऽभूत् क्षणम् ।।39।।

---

1. ०सराः, Pu.
2. अधिकः पाठः, B.H.U.
3. अधिकः पाठः, B.H.U.
4. प्रपञ्चः = विस्तारः, आदर्शमातृका स्पष्टयति।

किञ्चोवाच सुवाचमम्बुजदृशं प्राणप्रियां तां भृशं
प्रेमव्याकुलचेतसं स्मितरुचा कुर्वन् प्रकाशं पुरः।
कान्ते स्वान्तसुखप्रदे! न हि वचो मिथ्यावदाम्यन्तरे
भक्तं व्यक्तगुणं वहामि सततं तिष्ठन्नपि प्रान्तरे।।40।।

त्वं तु प्राणसमा मम प्रियतमा किञ्चोत्तमा श्रीगुणै-
र्नाहं कामितया तया तव पुरः सीते! ब्रवीम्युत्तरम्।
[1]श्रुत्वा वाक्यमिदं मुदञ्चिततनूरोमावलिः प्रेमत-
स्तस्थौ भूमिसुता त्रपाभरवृता किञ्चान्नतस्या क्षणम् ।।41।।

को वा स्यादधमः पुमानतितमस्तोमभ्रमव्यापृतो
लोके योऽतिरतस्ततश्च विरतः श्रीरामचन्द्राङ्घ्रितः?।
तस्यापि स्मृतितोऽमितोदितमहापापाः प्रतापाकुला
एते ते सकला भवन्ति विमला बालाभुवश्चावदत् ।।42।।

सेवा तेऽस्तु मृणालकोमलतनो! पूर्णा मनोहारिणी
गात्रं मेऽम्बुजपत्रमित्रवपुषः स्पर्शेन शीतं कुरु।
इत्युक्त्वा हृदयङ्गमेन शयनं नीता विनीता ह्रिया
सीतालिङ्ग्य तनुं प्रियस्य विदधे स्वापञ्च तापं जहौ ।।43।।

सीते! मत्तनुसम्भवः श्रमचयस्तस्याद्य जातः क्षयः
किञ्चानन्दसमुद्रभङ्गहननैश्चेतो भवत्याकुलम्।
आश्लेषाद् वपुषस्तवाम्बुजदृशः प्रेमस्पृशस्ता गिरः
श्रुत्वा श्रीरमणस्य भूमितनया निःसीममापत्सुखम् ।।44।।

यथेष्टमिष्टाचर रामनाम नो ते भवामः पदयोर्विमुक्तः।
एवं वदन्तः करुणं रुदन्तः सन्तस्तदन्तः प्रणता बभूवुः।।45।।

संसारतप्तः प्रतिपन्नगोप्तः प्राप्तः पदं तेऽद्य च पङ्कलिप्तः।
नोपेक्षणीयः किमु रक्षणीयः किञ्चेक्षणेन क्षणमीक्षणीयः ।।46।।

---

1. एवं पद्मदृशः स्फुटोत्करसप्रेमस्पृशस्ता गिरः
श्रुत्वा श्रीरमणस्य भूमितनया निःसीममापत्सुखम्।। – इतिपाठान्तरम्, B.H.U.

दीनाः [1]शुचीनार्पितचित्तवृत्ताः केचिन्निवृत्ता नगरं शुचार्त्ताः।
रामं वदन्तस्तमलं स्मरन्तः प्राप्तो न चान्तः सकलैरघानाम् ।।47।।

नेयः कथं कालमिहाब्दनील - संशुद्धशीलाघविराम! राम! ।
यज्जीवनं केवलमातुराणां तत्ते पदं दूरतरं दृशां नः ।।48।।

आधाय चेतो रघुनन्दनस्य ध्याने जनानेकसुखप्रदस्य ।
कालोऽद्य नेयस्त्विति ते वरिष्ठा भक्तेषु कष्टापनयाय चोचुः।।49।।

चित्तवित्तनिचयानपि सर्वान् चञ्चलातिचपलानबलादीन् ।
दूरतोऽपि च विहाय सहायानिन्दुसुन्दरमुखं स्मर रामम् ।।50।।

कृत्वा कृपां राघव ! दीनलोकानालोकयोदञ्चिततापतप्तान् ।
पीयूषधाराधरलोचनेन संसारदुःखान्वयमोचनेन ।।51।।

आलोकनाद् यस्य भवोग्रतापः प्रयाति नाशं सकलो जनानाम् ।
रामाभिरामः पुनराननेन्दुः कदा तव स्याद् विषयो दृशां नः?।।52।।

यत्राधरश्चारुतरः सरागो दन्तावलीदीपितमध्यभागम् ।
रामाननं पङ्कजमञ्जुनेत्रं पात्रं कदा स्यात् पुनरीक्षणस्य? ।।53।।

( यद्धि )पर्वतशतैरपि नैव यच्च दैवतवरैरपि गम्यम्।
मामकेऽस्तु हृदये सततं तद् रामचन्द्रचरणद्वयमेतत्।।54।।

उक्त्वैवमम्बाऽग्रत एव सर्वे स्रवद् दृगम्भोधरनीरपूराः।
पेतुश्च हेतुं गमने जनेशं पप्रच्छुरुज्जृम्भितदुःखभाराः।।55।।

रामः प्रणामशतपूजितपादपद्मा-
न्भूमीसुरान्विनयशोभि वचः समूचे।
श्रीमत्पदाब्जपरिचिन्तनवर्मगुप्तः[2]
क्लृप्ताखिलेप्सितचयः स्वयमद्य यामि ।।56।।

ब्राह्मणा ब्रह्मणा सृष्टा भवकष्टारयः परे।
तेषां पदे तदैव स्याद् दृष्टिर्वृष्टिविधेर्यदि?।।57।।

---

1. शुचीनां इनः = स्वामी, इत्यादर्शमातृका स्पष्टयति।

2. ०ह्यः, B.H.U.

पापजातं व्रजेदन्तं वृतं यच्चेतसि क्षणम्।
अस्तु स्वस्तिकरं ब्राह्मं तत्पदं विपदन्तकृत्।।58।।

विग्रहे जायते यस्य द्विजाङ्घ्रिरजसो ग्रहः।
न ग्रहास्तं प्रबाधन्ते विग्रहा[1] अपि सैनिकैः ।।59।।

मातुःपितुर्बन्धुजनाच्च सख्युरिष्टाद् वरिष्ठो द्विज एव नान्यः।
दातार एतेऽत्र मनोरथानामन्यः सुमान्यः सुखदोऽपि नाके ।।60।।

आहूय गेहात् प्रणिपातपूर्वं वित्तं प्रदत्तं समवाप्य किञ्चित् ।
नाके ददत्यादरतोऽप्यनेकं केऽन्ये सखायः क्षितिदेवताभ्यः?।।61।।

व्याजाद् द्विजानां प्रविधाय देहाच्चरन्तमूर्व्यां जनमङ्गलाय ।
तदीयमायाबलतोऽत्र केचिन्मूढा निगूढं न हरिं विदन्ति।।62।।

स्वरूपं जगदीशस्य हरेःरूपं द्विजन्मनः।
कलाविद्धमलाक्रान्त-जनता घनतापहृत्।।63।।

कृपा कृपालोर्जगदीश्वरस्य यदा पदाब्जस्य भवेदपारा ।
तदैव दैवोदयवीक्षितस्य भक्तिर्द्विजाङ्घ्रावुदयं प्रयाति ।।64।।

सुज्ञेन पुंसा तरलं नितान्तं विज्ञाय सर्वं खलु वित्तजातम् ।
कल्पान्तकालेऽपि तदक्षयाय भूदेवभूमध्यनिधौ निधेयम् ।।65।।

मुखद्वयं यद्यपि माधवस्य द्विजाग्निरूपं जगति प्रसिद्धम् ।
तथापि विप्रे प्रियता तदीया पुंसो यथा दक्षिणबाहुदण्डे ।।66।।

अदृष्टमूर्तिर्जगति प्रसिद्धः श्रीवासुदेवः पुरुषः पुराणः।
परन्तु जानन्ति जनाः किलाज्ञा नैवास्य मूर्त्तेः स्फुटतां द्विजेषु ।।67।।

अदेवताधीः क्षितिदेवतासु सञ्जायते यस्य नराधमस्य ।
नो सम्पदामेष कदापि गेहं तथापि देहं विपदः श्रयन्ते ।।68।।

द्विजाङ्घ्रिनीरोद्भवनीरलेशः स्फुटं स गङ्गाजलतोऽपि पूतः।
तमन्यथा तात! कथं समानं मूर्ध्ना ववन्दे जगतामधीशः।।69।।

---

1. विग्रहाः=संग्रामाः, इत्यादर्शमातृका स्पष्टयति।

देहस्यापि च गेहस्य परमेकं विशोधनम्।
सेचनं यत् पयोलेशैः ब्राह्मणाङ्घ्रिसमुद्भवैः।।70।।

ग्रामोऽभिरामोऽनुगतः कदापि मध्येऽपि मेध्येन पदा द्विजस्य।
कीर्णान्यवर्णैर्नगरी ततोऽन्या धन्यापि शून्या गुणतोऽनुमेया ।।71।।

संसारपाथोनिधिकर्णधारैरुच्चार्यमाणोऽपि सकृद् द्विजेन्द्रैः।
कर्णातिथिर्यस्य हि वेदघोषः कस्तोषपात्रं न भवेद् भवेऽस्मिन्?।।72।।

उपकृतिर्न यतो जगतो भवेद् विरहिणामपि तापचयक्षितिः।
द्विजवरोदरसम्भरणञ्च नो न रजनी रजनीसमतां व्रजेत् ।।73।।

सन्तु स्थिराङ्गा अपि मत्तनागास्तुङ्गास्तरङ्गाः पदगाः [1]रथाङ्गाः।
दत्तं [2]तथाप्यग्रभवाय दानं जाने निदानं नृपतेर्जयस्य ।।74।।

आपत्समाना परमापि सम्पद् यया धिया निर्मलया समेतः।
अखण्डमाखण्डलबन्धुपूज्यान् प्राज्यार्पणेनातनुतेऽतितुष्टान् ।।75।।

[3]पारङ्गतोऽयं द्विजनुःश्रुतेश्चेद् ब्रह्माकृतिः सत्सुकृतैकराशिः।
अब्धेर्विधीनामिह तस्य लब्धिः सद्भिः कृतोच्चं स्वकरं समुक्तम् ।।76।।

[4]तथाविधश्चातिबुधः कदाचित् कालेऽनले वीतमलङ्करोति।
होमं निकामं विदधीत कामं पूर्णं धरेशस्य सुरेश्वरोऽब्दैः।।77।।

तस्यैव वित्तं पुरुषस्य सत्यं कृत्यं यतः सिद्ध्यति भूसुराणाम्।
अन्यद् यदेतद् रिपुणा सदक्षं पक्षं छिनत्त्युद्गमने जनस्य ।।78।।

दत्ता स्वयं वा निजपूर्वजैर्वा[5] वृत्तिः परेणापि धराऽमरेभ्यः।
तस्या यदि स्यात् कुमतेर्जिघृक्षा कक्षा परा सैव शुभागमस्य ।।79।।

1. शता०, Ujj, B.H.U.
2. य०, B.H.U.
3. अधिकः पाठः, B.H.U.
4. अधिकः पाठः, B.H.U.
5. ० पूर्वजेन, B.H.U.

ब्रह्मस्वसंग्राहमतेर्विलासः सञ्जायते दैवहतस्य यस्य।
रूपान्तरेणान्वयकाननेऽस्य स एव दावः स्फुटतां प्रयातः।।80।।

यथा धेनुतनोः क्रव्यं तद्वद् द्रव्यं द्विजन्मनः।
स्पर्शायापि न वै योग्यं कुतो भोग्यं भवेदिदम्?।।81।।

सर्पणं सर्पवदने करस्य वरमेव तत्।
नादाने ब्रह्मवित्तस्य यतो नाशोऽन्वयस्य च।।82।।

द्विजापमानः प्रतिमः कलङ्को नैवाद्भुतः साधुजनं समेतु।
विदूरतोऽप्याशु समूलमेव यः कीर्त्तिचन्द्रं सकलं पिधत्ते।।83।।

सञ्जातकोपं प्रसमीक्ष्य विप्रं क्षिप्रं प्रसादं नतिभिः प्रणेयः।
हुताशनोऽयं ज्वलनप्रसिद्धः क्रुद्धः स नाशं कुरुतेऽन्वयस्य।।84।।

आशीर्द्विजानां सुकृतोदयेन सम्प्राप्यते येन नरोत्तमेन।
स पूरुषस्तत्पुरुषार्थपात्रं गात्रं तदीयं विगतामयञ्च।।85।।

एकं सखे ! त्वां प्रवदामि गोप्यं सखा न सख्या किल वञ्चनीयः।
यद्यस्ति वाञ्छा सकलार्थलाभे विश्वासमङ्घ्रौ कुरु वाडवानाम्[1]।।86।।

नैवास्तु चिन्ता भवतामथान्या सन्यायवर्त्माश्रयिणामपीषत्।
यावत् प्रयास्यामि पुनर्वनान्ताद् गृह्णन्तु तावद् द्रविणं यथेष्टम् ।।87।।

चिन्तातुरः कोऽपि च भूसुरः स्याद् भक्ष्याद्यभावाद् विषयेषु यस्य।
तद्देशनाथोऽपि तथैव पाथोधरप्रदत्ताल्पकवर्षणेन।।88।।

स्वकर्मनिष्ठाः शुचयोऽतिशिष्टाः कष्टान्निजं जीवनमाचरन्ति।
राज्ये यदीये न भवेत् स राजा किञ्च प्रजास्तस्य न वृद्धिभाजः।।89।।

कष्टस्य कारणं दुष्टः किञ्च स्वेष्टस्य नाशकः।
नासौ सङ्गतये योग्यः स्मर्त्तव्यं रामशासनम्।।90।।

[2]कफस्यापि च रेफस्य समाना दृश्यते स्थितिः।
नायाति मधुरैः शान्तिं विधुरैरेव शाम्यति।।91।।

---

1. वाडवानाम् = द्विजानामित्यादर्शमातृका स्पष्टयति।
2. एतत्पद्यं किञ्चित्परिवर्तनेन सह प्रथमसर्गेऽपि सन्निविष्टं विद्यते।

[1]शिष्टस्यापि च दुष्टस्य नान्तरं दृश्यते स्फुटम्।
अपूर्वं चिन्त्यते याम्यां कल्याणं जगतामिह ।।92।।

वारणे च रणेऽशक्तैर्मानवैःश्रिततानवैः।
अगाधादतिजेतब्यं[2] वारिणो वैरिणोऽपि च ।।93।।

मदाश्रितानामहमेव दाता त्रातापि चिन्तारहिता हितास्ते ।
एवं प्रतिज्ञा जगति प्रसिद्धा ममेति वृद्धाः सकला विदन्ति ।।94।।

वाचं निशम्येति सुधासमानामप्यम्ब! रामस्य बुधाः समानाम् ।
दृग्वारिधाराभरसिक्ततुन्दा आनन्दकन्दाङ्घ्रिदृशो बभूवुः।।95।।

आच्छाद्य चैलेन मुखं स्वकीयं चक्रुः स्वरेणापि परेण भूयः।
हा! राम! रामेति पदे निपत्य ते रोदनं दीनरवैर्द्विजेन्द्राः।।96।।

राम! त्वमस्माकमपप्लवानां कोऽपि प्लवो योऽतिनवोदयोऽसि ।
संसारघोरोदधिनीरपूरोदञ्चत्तरङ्गोदरगोचराणाम् ।।97।।

दुःखं कदाचित् सकलं कथञ्चित् शरीरभाजां सहनाय योग्यम् ।
हा! हा! वियोगे रघुनायकस्य शक्यो न सोढुं क्षणतोऽपि कैश्चित् ।।98।।

पूर्वं महापापविधानदक्षः किञ्चाप्यपक्षः सुकृते सदैव।
सोऽपि त्वया राम! निजाङ्घ्रिसेवा सम्वृत्तभावातिशयः कृतोऽयम् ।।99।।

नालोचितं चेद् वदनारविन्दं वृन्दं श्रियां राम! तव क्षणार्द्धम् ।
अभूत्तदा प्राणकुलं जनानां दुःखाकुलं स्याद विकलं मनोऽद्य ।।100।।

नो वै विलम्बः सकलेन्दुबिम्ब-विनिर्जये यस्य मनोरमस्य।
रामस्य कान्तं मुखमद्य शान्तं पश्यन्तु रम्यारुणरत्नदन्तम् ।।101।।

सुदुर्लभं राघवपादपद्मं सर्वे विदित्वा धरणीसुराग्र्याः।
संघर्षणं भालतलेन तत्र पुनः पुनः संविदधुः शुचार्त्ताः।।102।।

---

1. एतत्पद्यं किञ्चित्परिवर्तनेन सह प्रथमसर्गेऽपि सन्निविष्टं विद्यते।
2. ०भेतव्यं, B.H.U.

धृत्वोरसाऽवददसावखिलान् पुरस्था-
न्सम्मार्जिताक्षियुगलान् स्वकरेण रामः।
वासं विधाय वचनाज्जनकस्य दावे-
स्वावेक्षणं प्रविदधाम्यचिरेण भूयः।।103।।

मातर्यदाम्बुजपदावलितोऽवतंसो
वंशस्य भानुजननस्य स रामचन्द्रः।
साकं सरोरुहदृशा जनकस्य पुत्र्या
कुत्रापि दुःखदलिता जनता निपेतुः।।104।।

किं सूर्यवर्यजगतां भवता पुरस्ता-
दालोक्यते सकलनाशकमङ्गकर्म।
नाभूदिति क्षितितले श्रुतमेवमुच्चै-
रुर्ध्वाननाः पुरजना रुरुदुः समस्ताः।।105।।

केचित् शिरः पदयुगे प्रणिधाय गाढं
धृत्वा पुनः करयुगेन रुदन्त उच्चैः।
[1]मा मा गतङ्कुरुविभो! विपिनान्तराले
लोलेक्षणा विदधुरार्त्तगिरार्थनानि।।106।।

एते समस्ता भवता वनेऽपि यास्यन्त्यसंख्यं सुखमेव राम!।
वनान्तरादप्यधिकं पुरान्ते कान्तेन हीना विपदां पदानि।।107।।

स्याच्चेत् समीपे मरणं त्वदीये दावान्तरालेऽपि तवाश्रितानाम्।
नातः परो नो रघुनाथ! लाभः [2]साकं नयेति प्रखरं विलेपुः।।108।।

अदृश्यभावं प्रगते जनानां श्रीरामचन्द्रे सरसे रसेन्द्रे।
दुःखान्धकारो मनसामपारो विकारधारोदयमुत्करोतु।।109।।

प्रयाति नायं जनकस्य साम्यं यत्रास्ति वाम्यं[3] तनुजे निजेऽपि।
श्रीरामचन्द्रः करुणासमुद्रः प्रेमाम्बुनार्द्रः सततं हृदन्ते ।।110।।

---

1. नोनो विभो! कुरु गतं, Pu.
2. शिष्टाः वशिष्ठादय आमनन्ति, Ujj.
3. वाम्यम् = वक्रतेत्यादर्शमातृका स्पष्टयति।

याते त्वयि स्वामिनि रामकान्ता एते भविष्यन्ति समागतान्ताः।
यथा त्विमाः प्राणसमाः सतोका एवं स्वलोकापगमो महीयान् ।।111।।

तापातिशुष्यद् रदनाम्बराणां श्रुत्वा वचः पौरजनाङ्गनानाम्।
रामोऽभवत्प्रेमभरार्द्रचित्तः किञ्चाङ्ग - किञ्चिज्जललोचनान्तः।।112।।

आवृष्य पादौ जन-तारकेभ्यो बलादलं मङ्गलपादपद्मः।
चकार रामः पुरतः प्रयाणं प्राणप्रयाणादधिकं तदासीत् ।।113।।

चक्रुः समाक्रन्दमतीव सर्वे पर्वेन्दुवक्त्रार्पितदीननेत्राः।
ऊचुश्च दीनेश्वर! हैकवारं व्यालोकयारं व्रजमाश्रितानाम् ।।114।।

कृपासमुद्रः स्वजनेष्वितीदं नामापि नामाखिललोकरूढम्।
अद्यामितप्रोज्झितसेवकस्य श्रीराम! ते यास्यति नाशभावम् ।।115।।

वदन्तु के वा वद राम! लोकाः ये तेऽविवेकाश्रयिणो जगत्याम् ।
दीने दयालुं कठिनं भवन्तं स्वपादमूले पतिते जनेऽपि।।116।।

अन्याः समूचुश्च गलज्जलाक्षः श्रीरामवीक्षाऽचलचित्तवृत्ताः।
गन्तुं प्रवृत्ते भुवनावनेऽस्मिन् वियोगभीता वचनं समेताः ।।117।।

वयं तनूजा भवतः समस्ता एताः पुरस्तात् पतिता अनाथाः।
त्याज्यास्त्वया नैव दयाकरेण लोके वरेणापि च रामचन्द्रः।।118।

बहिर्यदा ते गमनं कृपालो! भवेत्कदाचिन्निजतोषणार्थम्।
युक्ता मुदा त्यक्तसमस्तकार्या दृष्ट्वा तवार्याननमासुरेताः।।119।।

दृष्ट्वा मुखं राम! सुखं मनःस्सु यज्जायते नः शरणागतानाम्।
नैतत् परे ब्रह्मणि दैवदृष्टे विनष्टकष्टेन्द्रियसाहसानाम्।।120।।

पिता भवानेव भवज्जनानां किञ्चापि माताऽर्भकजीवनाय।
त्वमेव रामासि सखा सुमित्रं किञ्चापि नेत्रं बहुभिः किमुक्तैः?।।121।।

नान्यद् भवत्तो रघुवंशकेतो! हा! लोकहेतोरपि हेतुभूतात्।
संरक्षणं वीक्षणभिन्नखेदात् कृतारिभेदादिह तात! नोऽस्ति।।122।।

नैतत्समस्तं सुखकारि हारि प्रच्छेदकारिन् जनकात्मजेश!।
पुत्रा विचित्राचरणाश्च देहं द्रव्यञ्च गेहं भवतो वियोगे ।।123।।

किं हा विधेयं बहुधेति वाण्या प्रोच्चैर्मुखं काचिदवोचदन्या।
हेतुः सुखानामयमेति रामो हा! हाऽद्य यामो विवशा क्व वेति[1]?।।124।।

जानीहि लोकानखिलान् सुशोकान्मृतानिमान् स्वाङ्घ्रिवियोगजातान्।
प्राणे गते क्वापि हि नैव दृष्टं सञ्जीवनं राम! कलेवराणाम् ।।125।।

श्रीरामचन्द्राननचन्द्र एष क्लेशप्रणाशः परिपूरिताशः।
तस्मिन् गतेऽगोचरताम्बराणां कथं भवेन्नो पतनं नराणाम्?।।126।।

नेदं सुखं ते रघुनाथचन्द्रो दुःखातितन्द्रोदयनाशहेतुः।
स्थानं कलानां किल कोमलानां हा! नोऽबलानां न दृशोरपैतु ।।127।।

पौराऽबला नेत्रजलाकुलास्या बालान् बलाद् रामपदःप्रदेशे।
आरोपयामासुरुदग्रदुःखादयोदयायास्पदया पयोधेः।।128।।

ऊचुश्च संस्पृश्य पदारविन्दं स्वमौलिदेशेन च मन्दमन्दम्।
सीतापते! लोकय लोललोलान् बालानबालान्तरलोचनाभ्याम् ।।129।।

त्वज्जीवना हा! रघुनाथ! नाथाः वयन्तु नाथार्पितदेहभावाः।
एते पुनः स्तन्यभुजो भवेयुः कथं विभो! जीवनकालयोग्याः?।।130।।

जानीहि नूनं जगतामनूनं रामास्त्यधीनं भवतः सुखं यत्।
व्यक्तं भवेदातुरमेव सर्वं त्यक्तं त्वया दीनदयापरेण ।।131।।

चेतस्त्वदीयं नवनीततुल्यं तस्यानुकूल्यं विवशेषु युक्तम्।
जातं तदेतद् रघुनाथलोहं जानेऽत्र हाऽहं विधिमेव हेतुम् ।।132।।

काठिन्यमायान्ति कदाचिदेते बालाः समासादितदुष्टशीलाः।
पितार्पितानेकविवेकभाग्य-सौभाग्यसारश्च तथा न दृष्टः।।133।।

कस्मै विभो राम! निवेदनीयो यो वेदनीयो भविताऽद्य भारः?।
को वाऽक्षयं नेष्यति तं च भर्त्ता पेतुस्तथार्त्ताः प्ररुदन्त एते ।।134।।

---

1. चेति, Pu.

[1]कं हाऽधुना राम! निकामतप्ताः पूर्वं प्रगुप्ताः शिशुवत्त्वया ये।
यामः सुदीनाः शरणं शरण्यं त्राता भवेद्यः शरणागतानाम्?।।135।।

[2]न ज्ञायते किं पतितो गिरीशो दुःखस्य तेषां शिरसां प्रदेशे।
किञ्चत् क्रिया नापि च विक्रियासीत्तेषु स्थितेषु क्षणमेव तूष्णीम् ।।136।।

नेत्रं जनानां रघुनाथ एव नामुत्र किञ्चिद् विमृशामि[3] मिथ्या।
गन्तुं प्रवृत्ते जनजीवनेऽस्मिन् शून्यं जगत् हा! सकलं विभाति ।।137।।

कुत्रापि गन्तुं स्थलमातुराणां न दृश्यते राघव! तावकानाम्।
विना पदं ते शमनापदं ते नो जायते देहभृतामपीषत् ।।138।।

अत्रापि पुत्रा विदधुः सुखानि मित्राणि चित्राण्यपि मन्दिराणि।
गावः प्रियावः सकलाः पदार्थाः व्यर्थाः विना राघवसङ्गमेन ।।139।।

नोल्लङ्घितं राम! कदापि पूर्वं सर्वं वचोयाचनतत्पराणाम्।
न श्रूयते तत् शरणागतानां किञ्चद् विभो! नो मरणोद्यतानाम् ।।140।

हीनास्त्वया सरललोचनदीनहीना
[4]ईनाऽधुना रघुपते! बत कुत्र यामः?।
एवं जनाः स्फुटघनान्तरदुःखजाला
हालाहलावृतिवचः प्रययुर्वदन्तः।।141।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैतविरचिते द्वितीयः सर्गः।।*



---

1. अधिकः पाठः, B.H.U.
2. अधिकः पाठः, G.N.J., Pu.
3. ०त्कलयामि, Ujj.
4. हा! हा०, Ujj.

## तृतीयः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात्।।1।।

हर्षात् पुरःपुर इयं रघुनायकस्य
गत्वा जवात्त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः प्राविदधे प्रथमावतारम्।।2।।

प्राप्तोदयं कोऽपि तदा धरायाः श्रेयश्चयः कोटिभवार्जितो यः।
सङ्गं प्रपेदे यदनेन साक्षात् पदेन रामस्य शिवार्चितेन।।3।।

नायकस्य जगतां शनैः शनैर्गच्छतो रघुपतेः सह श्रिया।
अङ्किताममलपदैः सुपङ्क्तिताप्यासभूमिरयनेति रञ्जिता।।4।।

पङ्कजाङ्कुशपविध्वजादिभिः शोमितानि च तलेऽखिलेशितुः।
राधवस्य चरतोऽत्र धूलिषु श्रीपदानि हि पदानि जज्ञिरे ।।5।।

तत्र तत्र च पवित्ररेणुभिः श्रीनिवासपदपद्मसङ्गतैः।
सन्निपत्य विदधुः कलेवरे केऽपि केऽपि च परे कृतार्थताम् ।।6।।

दैवतान्यपि च तानि सङ्गतान्यत्र चित्रमपरं विरञ्चिना।
संविधाय पदयोर्नतीरलं[1] रेणुजालममलं दधुस्तनौ।।7।।

रामपादकमलस्य धूलयः प्रोद्धृता विधिमता नभस्वता।
पावनानि दधिरे समन्ततः सङ्गताः सह वनानि जन्तुभिः।।8।।

---

1. ०स्तयोर्नती, Ujj.

राम! मारय निशाचरव्रजं भूमिभारमतिदूरतः कुरु।
सन्नियुज्य मुनयो नताः करान् श्रीवरस्य पुर आहुरातुराः ।।9।।

सेवकस्तव जनेशनायक! श्रीमदङ्घ्रिकमलान्तिकं गतः।
पाहि विश्वमखिलं विरञ्चिनाऽप्येवमुक्तमिह सक्तमौलिना ।।10।।

दैवतोदरदरीपरिपूर्त्त्यै हाऽतिदुःखभरभाजनभावम्।
यासि राम! भवतः सुखपूर्त्तेर्नोतनोरतितनोरिह[1] कृत्यम् ।।11।।

एवमेवमतिदीनतराणि तत्पराणि च पराणि वचांसि।
प्रोच्य चास्य चरणे प्रणिपत्य ते ययुः सुरसदः सुरमुख्याः।।12।।

मध्ये घनानि द्रुवरैर्वनानि भिल्लादिनानाजनजीवनानि।
चचार रामः सविचारसारः प्राप्तानि मार्गे बहुभीषणानि।।13।।

क्रान्त्वा क्रमान्मार्गममार्गगारिः पारिप्लवा क्ष्माप्रियया दिनान्ते।
प्रापत् स दुःप्रापयशःसमुद्रः श्रीरामचन्द्रः पुलिनं द्युनद्याः।।14।।

तस्मिन् दिने दीनजनावलम्बो दीनाननः क्षीणमनः प्रचारः।
अचेतनाङ्गः स महाश्रमेण स्थितोऽत्र रामः क्षणमेव तूष्णीम् ।।15।।

कृत्वा मुखं सर्वसुखस्य भोक्त्री पुत्री धरित्रीतलपालकस्य।
अधोव्यधाल्लोचननीरधारा-सिक्तान्तरां दुःखभराद् धरांशा ।।16।।

मातः पदे तस्य सदेश्वरस्य सर्वस्य हा! सङ्गतभूमिभागे।
ताभ्यां कृतं क्रूरपथे प्रयाणं कथं न यानं भविताप्यसूनाम्?।।17।।

आनीय नीरं सुरनिम्नगाया गात्रं पवित्रं प्रियया करेण।
सिक्तं विमुक्तं शनकैः श्रमेण बभूव रामस्य मनोरमस्य ।।18।।

जगत्पतिं राममुपेत्य गङ्गा प्रोद्यत्तरङ्गाकृतिशस्तहस्तैः।
संस्पृश्य पादौ कमलावलीभिरपूजयत्पूजितमीश्वराद्यैः।।19।।

पित्राहमत्रागमनेन कन्या लोकेषु धन्या विहिता च पुण्या।
अवोचदेवञ्च मुदा तदा तं विहङ्गमाली-कलकूजितेन ।।20।।

---

1. सुखमूर्तेर्नातनोरिति जनो, Ujj.

आलोक्य लोकाधिपतिः स रामो रामोऽमरामोदनिदानमेषः।
गङ्गामनङ्गारिशिरो विभूषां लेभेऽप्यशेषां मुदमस्तखेदः।।21।।

चकार मारप्रतिमाभिरामः स्नानं परानन्दभरेण रामः।
स्मृत्यात्महत्यादिकपातकानां हन्ताऽप्यहन्तारहितो हिताय ।।22।।

निःपापनामान्यभिमानिलोक-संसर्गजाताऽमितपापयाऽलम्।
ब्रह्माकृतेरस्य च राधवस्य सर्वाङ्गसम्भावितया द्युनद्या।।23।।

केशाः सुवेशा जगदीश्वरस्य किञ्चित्प्रमृष्टा[1] वटजैः पयोभिः।
जाता जटास्ताभिरकारि कापि[2] शोभैव माता रघुनन्दनस्य।।24।।

बद्धाः जटाः प्रतिभटान्तकभीषणेन
रामेण गाङ्गपुलिनेऽमलकुन्तलानाम् ।
ताः वीक्ष्य रामदयिताऽप्यतिदुःसहानां
गाढं बबन्ध च जटां हृदि वेदनानाम् ।।25।।

वासं नाथ! वने सुखं कुरु घने साकं मयैकं प्रभो!
[3]तत्राप्यम्बुजपत्रनेत्रयुगल! त्वामर्थये किङ्करी ।
वेशः क्लेशमलं दधाति मनसो योऽयं[4] त्वया स्वीकृतः
सीतावाक्-सितसायकेन निहते रामेऽभवद् विभ्रमः ।।26।।

युक्तो वेष इति प्रतीततपसां स्वामिन्! मुनीनां वने
नित्यं हा! वसतां कुतो विलसतां शक्त्यावतां भूभृताम् ।
एवं दीनमुखीं गलज्जलदृशं भीत्या सकम्पां भृशं
कुर्वन्ती पुरतोऽर्थनां जनकजां संवीक्ष्य रामोऽपतत् ।।27।।

---

1. किञ्चिद् विलिप्ता, Ujj., B.H.U.
2. काचित्, Ujj, B.H.U.
3. तत्राम्भोभव०, Ujj.
4. योऽसौऽधुना संश्रितः, G.N.J., Pu.

[1]जलञ्च नालङ्कृतिना निशायां[2] रामेण भुक्तं सुरसिन्धुतीरे।
[3]तद्वीक्ष्य जाता जनकात्मजायाः स्थितिर्मृतस्यापि च मारणेन[4]।।28।।

उल्लासमीयुश्च पुरो यदग्रे शतानि मातः पृथिदीपकानाम्।
अक्लेशतः क्लेशकरेऽन्धकारे चकार तीरे स्थितिमेष रामः ।।29।।

[5]दुःखं विना नागलतापलाशैर्जातं विनाशैकनिदानमस्य।
तच्चापि धीरो रधुवीरवीरो विचारसारो ह्यकरोन्न चित्ते ।।30।।

[6]आस्यं यदा याति च शुष्कभावं प्राप्याप्यभावं क्रमुकांशकस्य।
तस्यापि सीता कुरुते करेण नीरेण योगं बहुशः श्वसन्ती ।।31।।

गाङ्गे तटे सन्निकटे वटस्य श्रीरामचन्द्रो भुवि संविवेश ।
सीतासमेतस्तमवेक्ष्य चेतः प्रायोऽनुजस्याकुलतां जगाम ।।32।।

तस्यापि[7] शेषस्य तथा न भारो जातो धराया इति गम्यतेस्म ।
भारादतो लोचनतो जलस्य धाराः अपाराः परितः प्रवृत्ताः।।33।।

अङ्गानि रामस्य मनोहराणि सरोजपत्राधिककोमलानि ।
असौ शयानः शयने धरायां निद्रां न चन्द्रानन आससाद ।।34।।

सीताऽतिभीता तुहिनप्रचारा दारान्निजेशस्य तनौ प्रलीना ।
तद्वीक्ष्य रामो बहुधा प्रतप्तः सुप्तः क्षितौ धैर्यमसावसादीत् ।।35।।

निशाऽकृशा यापि च याति नान्तं लेभे नितान्तं हृदये सखेदम् ।
पुनः पुनश्चालितपार्श्वयुग्मं तिग्मं त्यजत् श्वासभरं च रामः ।।36।।

---

1. फलञ्च, Ujj, B.H.U.
2. धराया, G.N.J., Pu.
3. आलोक्य, G.N.J., Pu.
4. ०णस्य, G.N.J., Pu.
5. अधिकः पाठः, B.H.U.
6. अधिकः पाठः, B.H.U.
7. ०वि०, G.N.J., Pu.

नायाति निद्रा कथमद्य सीते! सुप्तासि कान्ते! विषमे धरान्ते ।
विपर्ययादेव जनाः लभन्ते सुखञ्च दुःखं न कथं श्रुतं ते?।।37।।

आलिङ्ग्य देहं हृदयङ्गमस्य सुप्तास्मि तृप्ता महता सुखेन ।
दुःखं कुतः स्यादिति भूसुतायाः वचः शुचः स्थानमधाच्च रामे ।।38।।

बोधं प्रपेदे सरसीरुहाक्षो भोगेषु दक्षो विधिसङ्गतानाम् ।
भागीरथीतीरविसारिसारी सकीरकीरी-खगकूजितेन ।।39।।

आलोक्य तल्लोकपतेः समग्रमत्युग्रशक्तेरपि राघवस्य ।
अधोमुखो दुःखभरेण बन्धुर्धैर्यस्य सिन्धुर्भवतिस्म भूयः।।40।।

स्वर्गापगातीरवटद्रुमस्य मूले शयानः शयने धरायाम् ।
शृण्वन् स रामस्तवनं द्युनद्याः कृतं द्विजेन्द्रेण सुखानि लेभे ।।41।।

श्रोतव्यमेतत् परमं पवित्रं स्तोत्रं विचित्रं सुरनिम्नगायाः।
केनापि गीतं धरणीसुरेण स्वरेण यच्चापि मनोहरेण ।।42।।

अङ्गेऽपि गङ्गे ! यदि ते कदाचिन्नीरस्य लेशोऽपि नरस्य लग्नः।
सपातकोत्तुङ्गगिरिप्रभेदे दम्भोलिभावं न किमु प्रयाति? ।।43।।

बिन्दुरिन्दुकमलाकान्तः स्वान्तसंशोधनक्षमः।
स्वप्नेऽपि दुर्लभे! गङ्गे! कुतः स्वाङ्गेऽस्य सेचनम्?।।44।।

धन्या जन्यास्त एवात्र गङ्गानीरलवस्पृशः।
येषां केषामपि क्लेशाः न भवन्ति भवोद्भवाः।।45।।

कुर्वन्तु यत्नान् मुनयोऽप्यनेकान् भागीरथि! स्वाङ्गनिपातमुख्यान् ।
परन्तु वासो विमले तदैव कूलेऽनुकूलो यदि वासुदेवः।।46।।

अमरसदनसिन्धुक्षीरबिन्दुश्रिताङ्गाः
सकलविबुधमान्यास्ते भवन्त्यम्भजन्याः।
अपरमपि विचित्रं जह्नुपुत्र्याः परं यत्
तदमलपदवीक्षा पापदक्षान्[1] पुनाति ।।47।।

---

1. ०क्षा पुनीते, B.H.U.

कायो मदीयः समलस्त्वदीयैः सुस्नापितो जाह्नवि! शुद्धनीरैः।
नागस्त्वदः क्षालयति प्रयत्नात् पुत्रस्य गात्रं स्वकरेण माता ।।48।।

अमृतविमलशीतापारनीरान्तराले
जननि! जननजातानन्ततापप्रशान्त्यै।
कृतमतिततहस्तं क्रीडनं यत्कदाचि-
त्तदपि न तव मातुः कोपहेतुत्वमेतु ।।49।।

विशुद्ध्यर्थं त्वयि स्नाता [1]अविशुद्धास्त्वया कृताः।
अपूर्वा पूर्वजाराध्ये गङ्गे! मातः! कृतिस्तव ।।50।।

पुरा जातं कान्ता-स्मरमधुरवाणीरसयुतं
शनैः शुष्कं पश्चात् प्रखरतरवैराग्यरविणा।
तदायातं दूरादलघुविधिवायोः सुरनदी-
मिदानीमावर्त्ते भ्रमति मम चित्तं तृणमिव।।51।।

निर्भयं विहर पुण्यविग्रहे! स्वे गृहेऽत्र न हि कोऽप्यरिस्तव।
मां स्पृशन्त्यमरसिन्धुसीकरा येऽपराधनिकरान्तकोपमाः।।52।।

अङ्गं तरङ्गाः कलयन्ति गङ्गा-भवा भवाब्धेः भवतो गतिः का?।
स्थितं त्वदीयेन समागमेन चिरं मया तेन दया समेति ।।53।।

जाह्नवि ! त्वयि करोमि मज्जनं यज्जनं नयति वैष्णवं पदम् ।
मातरस्मि सकलेषु सत्तमो यत्तमो भवभवं विनाशितम् ।।54।।

जाह्नवीपुलिनशालिपल्लवाद् वल्लवाधिपतनूजसेविनः[2]।
कल्पयेद् यदि विधिश्च वर्त्तने नर्त्तनेऽपि भवेत् प्रवर्त्तनम् ।।55।।

जाह्नवीसलिलपानवितृष्णः कृष्णचिन्तनगताखिलपापः।
वीक्षणेऽपि वपुषो मम कालं शङ्कितं बत कदा नु करिष्ये? ।।56।।

स्थित्वा त्वत्पुलिने तथा च सलिलस्नानान्नपानादिभि-
र्मातर्जाह्नवि! पूरिता मम मनोवाञ्छाः समस्तास्त्वया ।

---

1. अवयः शैलमेषार्काः, इत्यादर्शमातृका स्पष्टयति।

2. ०नाम्, B.H.U.

एकं त्वद्य सुपूरयातिसुभगे गङ्गे! मदीयं प्रियं
त्वन्नीरे स्मरतः शिवं हृदि वपुर्मोक्षः समक्षं सताम् ।।57।।

जाते प्रभाते विमले च याते रुदत्योध्या नगरी सुमित्रे! ।
[1]गुहः गुणानां परमः समूहो नावं समारोप्य निनाय पारम् ।।58।।

[2]हा! पुण्यपेयं सुरसिन्धुतोयं हित्वा कुतोऽयं गहनं प्रयातः?।
काला विशालाः परितोपि शालाः यत्रापि मालाः करिणं चरन्ति ।।59।।

गुहोपकारो विहितो गरीयान् नीता वयं यत्सुरसिन्धुपारम् ।
जहास सोऽलं रघुनाथवाक्यात् कुर्वन् प्रणामान् प्रपदे तदेतत् ।।60।।

यन्नाम रामस्मृतितः समस्तान् पारं भवाब्धेर्नयति क्षणेन ।
कः क्लेश एनं सुरसिन्धुपारं गन्तुं भवेत्तस्य महामहिम्नः?।।61।।

रामोऽतितुष्टो विनयैर्गुहाय भूयादिहायस्तवदीर्घमायुः।
अन्ते च मुक्तिर्मयि चातिभक्तिः शक्तिश्च पङ्क्तिं प्रददौ वराणाम् ।।62।।

स्नातोऽपि रामः शुचि गाङ्गनीरैः पुनः प्रयाणे विदधेऽभिषेकम् ।
बाहुद्वयालिङ्गनवीतदोष-गुहस्य सन्तोषदृगम्बुपूरैः ।।63।।

प्रेमाश्रुसम्पूर्णविलोचनाब्जः सगद्गदं[3] श्रीरघुवंशरत्नम् ।
कुर्वन् कृती साङ्गनतीः प्रयाणे स्नेहाद् विमोहः स गुहः समूचे ।।64।।

आयाहि पाहि प्रणतान् हि राम! त्वं दीनलोकोद्धरणे प्रसिद्धः।
तपः फलं सर्वतपोधनानां कुरुष्व नित्यं चरणे रतानाम् ।।65।।

पुनर्यथोक्तं प्रणतः पदाब्जे गुहः कृपालोः रधुनन्दनस्य ।
दासानुदासस्य कदाचिदस्य स्मृतिर्विधेयेति रुदन्नवोचत् ।।66।।

---

1. गुहः समूहः परमो विधीनां तन्नावमारोप्य, Pu.
2. अधिकः पाठः, B.H.U.
3. सगद्गदम् = सकण्ठकम्पमित्यादर्शमातृका स्पष्टयति।

नमच्छिरो[1] रामपुरोऽमराणां नदीमवादीज्जगतीतनूजा[2] ।
आयातु रामः कुशली प्रणामः [3]श्रीजाह्नवि! त्वत्पदपङ्कजाय ।।67।।

अभून्नता भूमिसुता तदानीं दुःखैः[4] सुहृद्देशवियोगजातैः।
परन्तु भीता रघुनाथदृष्टे-र्हृष्टेव दृष्टा निकटस्थलोकैः।।68।।

पुनर्दृशा पूर्वदिशा प्रदेशानालोकयन्ती जलजाक्षियुग्मा।
संयोज्य पाणी प्रणतावदत्सा भूयादयोध्ये! पुनरीक्षणं ते ।।69।।

श्रुतं वचो यैर्जनकात्मजाया मातः परन्तत् करुणोपपन्नम्।
क्षणं बभूवुर्हृदयेन शून्याः किञ्चातिदैन्याश्रयिनः समस्ताः।।70।।

गच्छन् पुरस्तात् सुरनिम्नगायास्तीरात्सवीरार्चितपादपद्मः।
सबन्धुकान्तो विदधे नितान्त-दुःखातुरान् सर्वनरान् स रामः।।71।।

गङ्गा तदङ्गार्जितभूरितोषा यान्तं सदेशाज्जगतामधीशम् ।
दुःखातुरा तद्गतवारणाय प्रोद्यत्तरङ्गाऽस्य पुरः ससार ।।72।।

त्यक्तुं न शक्यं मदतापि नूनं प्रेमस्वकीयेषु कदापि किञ्चित् ।
अत्र स्फुटं दाशरथिर्निदर्शो यो दुःखमापद् द्युनदीवियोगे ।।73।।

हा! हा! [5]बालमृणालकोमलतलं कान्त्याकुलं पादयो-
र्युग्मं तिग्ममरीचिवंशकुमुदश्रीरामचन्द्रस्य यत्[6] ।
व्यानम्रक्षितिपालमौलिजमणिश्रीरञ्जितं तत्कथं
जातं कण्टककूटकुण्ठितगति-प्रोक्तापतज्जानकी ।।74।।

---

1. ०रः सा च पुरः सुराणां, G.N.J.
   ० रः सा विधुरः सुराणां (?) Pu.
2. ०त्तनुजा धरायाः, G.N.J., Pu.
3. सबन्धुरास्तु पदाम्बुजाय, Ujj., B.H.U.
4. दुःखातिभारैः स्ववियोगजातैः, Ujj, B.H.U.
5. पद्म०, G.N.J.
6. तत्, Ujj., B.H.U.

दुःखं जानकि! किञ्चिदेव हृदये नानेयमेतत्त्वया
प्रारब्धं किल कर्मधर्मिभिरपि स्वीयं जनैर्भुज्यते ।
श्रुत्वोक्तिं सपयोदृशो रघुपतेर्धैर्यं विहायैव सा
तच्चालिङ्ग्य पदद्वयं सकरुणं प्रोच्चैः रुरोदातुरा ।।75।।

जाताऽहं भुवनेश्वरप्रियतमा पुत्री धरित्रीपते-
रीशश्चापि दिशामसौ दशरथस्तस्याग्रगण्या बधूः।
सेयं दन्तिनिनादनादितमहात्रासप्रदारण्यभू-
र्मध्याध्वप्रसरप्रदीर्णचरणा पत्या भ्रमाम्यद्भुतम् ।।76।।

सुप्तस्याङ्कतलेऽमलेन्दुयशसो रामस्य रामप्रिया
बध्नन्ती मुकुटं जटाभिरभितः स्रस्तं प्रियस्याज्ञया ।
आज्ञा तत्करणे नरेश्वरसुता खेदोदयादुच्छलत्
श्वासप्रासविदारिता क्षितितलं लेभे क्षितेरात्मजा ।।77।।

संवाहनं[1] विदधती चरणाम्बुजस्य
सीता[2] श्रमातुरतनोः पथि राधवस्य।
शेषो निरीक्ष्य परितोऽत्र च कण्टकानां
देहे दधार चयमाशु च कण्टकानाम् ।।78।।

उपेक्ष्य भक्ष्यं स्फुरदिन्दिराक्षः कक्षान्तरे स क्षतपादपद्मः।
देवाधिदेवस्य [3]च राघवस्य सेवां सुमित्रातनयः करोति ।।79।।

[4]तथापि रामोऽर्पितसर्वकामो भ्रमन्स रामो विपिनान्तराले।
निजेऽनुजेनेति च पृष्ठदेशे शेषे विशेषेण सुखं प्रयाति।।80।।

सीतापदे कोकनदेन तुल्ये जातक्षते वृक्षखराग्रभागैः।
रक्ताप्लुते वीक्ष्य च [5]राघवोऽयं धीरोऽप्यधीरं व्यतनोन्मनोऽलम् ।।81।।

---

1. ० क्षाल०, Ujj., B.H.U.
2. साध्वी, G.N.J.
3. स०, Ujj.
4. अधिकः पाठः, G.N.J., Pu.
5. स राघवस्ते, G.N.J.

भक्ष्याद्यभावाद्यदिहोपवासो रामस्य नैवेतरयोः कदाचित् ।
श्रीरामनामामृतमत्ति सीता भ्राता तदङ्घ्रीक्षणतृप्तचेताः ।।82।।

म्लाने स्वीयमुखाम्बुजेति विपिने तीक्ष्णैश्च तीक्ष्णद्युते-
दीप्तीनां निकरैः करेण करुणा-नीरप्रकीर्णेक्षणे।
कुर्वन्ती कमलाऽतिकोमलकरां च्छायां क्षितेरात्मजां
ज्ञात्वाऽभूदधिकं सखेदरविणा म्लानाननो राघवः।।83।।

व्यक्तं युक्तमिदं करोषि हि करैर्यत्स्पर्शनं प्रेमतः
स्वीयस्यास्य महावनान्तरगतैः खेदं परं गच्छतः।
गात्रं मित्रसरोजपत्रमृदुलं कान्तस्य तत्तान् कुरु
हारान् तीक्ष्णतरान् करानिति पुनः सीता वदन्त्यापतत् ।।84।।

मित्रामित्रविनाशिनो रघुपतेर्नैवातपत्रं पुन-
र्गात्रं वल्कलमात्रवस्त्रकलितं नो संवृतं[1] सर्वतः।
दैवाद् दैववनान्तरेषु चरतस्त्वं चापि तापं करै-
स्तीक्ष्णै र्हा! कुरुषे वचः क्षितिभुवो दीनं तदेनं व्यधात् ।।85।।

रामः पुरः सर्वमनोहरश्रीस्तस्यापि पश्चाज्जनकस्य पुत्री ।
ततः[2] समर्थो महसानुजोऽपि मार्गे वनस्यापि सुखं चरन्ति ।।86।।

कृतस्तुतिः सत्कृतिभिर्मुनीशैः प्रत्याश्रमं पूजितपादपद्मः।
भुञ्जन् फलादिप्रियतार्पितं तैः[3] श्रीचित्रकूटं गिरिमाससाद ।।87।।

ज्ञात्वा त्रिलोकी-तिलकं सकामं रामं गिरिश्रीपरिलोकनेषु ।
वाणीप्रचारे चतुराग्रणीः स प्रोवाच सौमित्रिरतीव चित्रम् ।।88।।

श्रीरामधामजलधे! प्रणिधेहि नेत्रे
गोत्रेश्वरे जनमनोहरकाननेऽस्मिन्।

---

1. ०पात्रमपि नो तेनावृतं, B.H.U.
2. पश्चात्परीतो, Ujj., B.H.U.
3. तैरगात्त्रिकूटं हतवैरिकूटः, G.N.J.
   तैरगात्सुकूटं लघुचित्रकूटम्, Pu.

श्रीर्वासमत्र विदधाति कथं निवासो
न श्रीपतेरपि तवोचित ईश! नित्यम्?।।89।।

भवानिवार्यं जगतीरुहाणां श्रीमान्समाजो भुजचारुशाखः।
च्छायाश्रितानां विधुनोति तापं [1]नीलोत्पलश्यामलकान्तिपूरः।।90।।

कान्तालताः श्रीरधुनाथपुष्पैस्तोषाद्धसन्त्यो भवदागमेन।
किञ्चातिलोलैर्विलसत्प्रवालैराकारणं पाणिशतैश्चरन्ति[2]।।91।।

त्वत्कीर्त्तिनिर्मलजला [3]विमलान्तराला
मालाभिराभिरभितः कमलाकराणाम्।
सत्तीरनीरलहरीचयसिक्तदेहै-
श्शोभां परां शुचि खगैर्दधते तडागाः ।।92।।

एते पतन्तः परितः प्रवाहाः उत्तुङ्गमौलेरचलेश्वरस्य ।
सम्पादयन्त्यन्तरतः प्रशस्तं स्थानं समस्तं जलसेचनेन ।।93।।

किञ्चाश्रमाःश्रमहराः भवभीमदाव-
सञ्चारिणां दृशमिता अपि ये नराणाम्।
यत्रानिशं भृशमशेषजनेशपुण्य-
गाथापथेषु निपुणा मुनयो वदन्ति।।94।।

मन्दाकिनीकूलमदोऽकूलं सन्ध्याविधानेषु तपोधनानाम्।
प्रायः सुखं लोकदृशां तनोति तुल्यं पदातेः रघुवंशकेतोः।।95।।

एताः शिलाः शीततलास्तरूणां छायान्तराले विलसन्ति राम!।
ये केऽपि तप्ताः किरणैः खरांशो र्विश्रान्तिमश्रान्तमिहाश्रयन्ते ।।96।।

यथा पुरि! त्वत्पदपालितायामानन्दमायान्ति जना अखण्डम्।
अस्मिन् तथैवेशमुनिप्रवर्याः श्रीरामचिन्तानिरतान्तरालाः[4] ।।97।।

---

1. पापं च नीलाकृति० Ujj, B.H.U.
2. पाणिभिराचरन्ति, Ujj., B.H.U.
3. रुचिरा०, G.N.J., Pu.
4. निरतस्वभावाः, Ujj., B.H.U., Pu.

ब्रह्मादिदेवेशकृतप्रणाम! रामप्रभो! लोकय कौतुकानि।
स्वभावजं वैरमिमे विहाय क्रीडन्ति सानन्दमरातिमध्ये।।98।।

सर्पन्ति सर्पाङ्गतलेषु लोला बाला अखण्डं परितो वृकाणाम्[1]।
विहाय वत्सान् निकटे वृषाणां गावोऽपि दावोदरमाश्रयन्ते ।।99।।

नृसिंहरामः प्रकरोति सिंहे करी करेणाक्रमणं यथेष्टम् ।
व्याघ्री सदा पश्यति [2]धेनुमेनां कन्यासमानां हृदये प्रलीनाम् ।।100।।

कालो विडालो निकटोपविष्टः शिष्टा कृतिस्तत्पुरतो रतोऽयम् ।
विहाय भीतिं प्रमुदोन्दुरूणां गणः कणानां मदने विचित्रम् ।।101।।

हया [3]हयारिप्रविहारभाजो नाजो वृकाद् भीतिमसौ प्रयाति ।
किञ्चास्खलन्तो नकुलाङ्गभागे नागेश्वराः खेलनमाचरन्ति[4] ।।102।।

अङ्के तुरङ्गेण तुरङ्गशत्रोः शृङ्गेण तुङ्गेन भयं विहाय ।
चिरं सुखान्मीलितनेत्रयुग्मं हर्षेण घर्षः क्रियते[5] विचित्रम् ।।103।।

रागान्मृगानङ्गतले निधाय शाखानिवालिङ्गति तान्मृगारिः।
व्याघ्रोऽपि लेहं कुरुतेऽमितेहं रसज्ञया तर्णकपर्णकर्णे ।।104।।

क्रोधानुरोधो हृदये मदीये यश्चाभवन्नाशमसावुपेतः।
धामप्रसिद्धं भुवि यस्य कामस्तस्यापि नाम श्रवणं प्रयाति ।।105।।

सम्पत्कृतार्था भवतीह सैव स्याच्चेदियं विप्रकरे प्रदत्ता[6] ।
अन्यातिधन्यापि [7]तले धरायाः व्यर्था समर्था इति संवदन्ति ।।106।।

---

1. वृकाणाम् = मूषिकाणामित्यादर्शमातृका स्पष्टयति।
2. किञ्च धेनुं प्रेम्णा विचित्रं भगिनीसमानाम्, G.N.J.
3. हयारिः = महिषा इत्यादर्शमातृका स्पष्टयति।
4. ०श्रयन्ते, G.N.J., Pu.
5. ०तेऽद्भुतं तत्, G.N.J., Pu.
6. ०करप्रमृष्टा, G.N.J.
7. रघुप्रवीर!, Ujj. B.H.U.

त्वन्नामसंस्मृत्य करे द्विजस्य समर्पितं[1] केन च किञ्चिदेव ।
[2]तज्जातपुण्यस्य न विद्यतेऽन्तः कुतः स्वयं स्वीकरणे भवेत्सः? ।।107।।

वासादयस्सर्वनिवासिनस्ते लभ्यादगण्यैरपि पुण्यपूगैः।
भविष्यति श्लाध्यतरः सुराणां लोकेऽपि शैलः किल चित्रकूटः।।108।।

तोषं प्रयातो वचनैः सुधाभैस्तैस्तैः सुमित्रा-तनयप्रणीतैः।
कान्त्या गिरीशोद्भवया स रामो रामोऽश्रयच्छीतलशालमूलम् ।।109।।

यद्यप्यसौ वल्कलखण्डवासा उद्यज्जटामण्डलमौलिदेशः।
स्फुरत् श्रिया देहजया स रामो [3]व्यालोकि लोकैर्गिरिजैस्सचित्रम् ।।110।।

उत्फुल्लनेत्रं रघुनाथवक्त्रं पात्रं श्रियां सर्वमनोरमाणाम् ।
छात्रैः कलत्रैः सह मित्र-पुत्रैस्संघाः मुनीनां ददृशुः सतृष्णयम्[4]।।111।।

ऊचुर्मिथश्चापि भवेदयं कः पङ्केरुहाक्ष्या प्रियया समेतः?।
प्रायः प्रियः प्राणपतिः प्रतीतः सिद्धिं प्रदातुं तपसामुपेतः।।112।।

इयं तु पद्मा किल पद्मसद्मा विद्मः प्रमाणै र्न हि संशयोऽत्र ।
अङ्गात्तरङ्गाः [5]कृतचित्तरङ्गा कान्त्या कुरङ्गाकृतयः सरन्ति ।।113।।

इयं तु माता जगतां प्रसिद्धा यया निरुद्धा दितिजा महोभिः।
प्रच्छन्नरूपा कृपया मुनीनामत्रापि यात्रा शरणाय तस्याः ।।114।।

इयं प्रसिद्धा जगतां समृद्धा यया निरुद्धा दितिजा महोभिः।
[6]पञ्चास्यपत्रा विलसच्चरित्रा यत्रापि यात्राशरणाय तस्याः।।115।।

---

1. विष्णोऽर्पितं, G.N.J.
2. ०स्यापि, Ujj., B.H.U.
3. लोकैस्सचित्रं सकलैरलोकि, Ujj., Pu.
4. सचित्रम्, Ujj., B.H.U.
5. कथमिन्दुशीताः शोभाजलानां परितः सरन्ति, G.N.J., Pu.
6. पञ्चास्यपत्रा = सिंहवाहनेत्यादर्शमातृका स्पष्टयति।

पत्न्यो मुनीनां परिवब्रुरेनामेणाङ्कवक्त्रां[1] कुतुकेन दूरात् ।
तद्रूपसिन्धूदितभङ्गसङ्ग-सम्भ्रान्तलोलायतलोचनाब्जाः ।।116।।

ऊचुश्च शीतेन महातपेन दावप्रचारैरपि पीडितायाः।
कान्त्या प्रशस्यं कथमास्यमस्याः विलोकितं हा! हरति प्रतापम्?।।117।।

भासा पुनर्भाति सुचारुनासा ग्रासा विमुक्तापि च मौक्तिकेन ।
रम्याधरोऽस्याश्च दधाति रागं विनापि सङ्गं बत नागवल्याः।।118।।

पङ्क्ती रदानामपि सम्मदानां[2] शतानि चित्ते कुरुते सुदत्याः।
या पद्मरागाधिकरागभागा सम्प्राप्तसङ्गापरया श्रियाऽलम् ।।119।।

पदस्तलं पद्मदलं श्रिया यत् हसन्त्यलं कोमलकान्तिकान्तम् ।
दूरे प्रचारेऽपि वनान्तरेऽस्याः तोषं दृशोर्नो बहुशो दधाति ।।120।।

बालेन्दुभाले विमलान्तराले काश्मीरबिन्दुं न विनास्ति भूषा ।
तथापि शोभां [3]वहति प्रकृष्टां दृष्ट्वैव[4] यां तुष्टिमुपैति दृष्टिः ।।121।।

विलोकयन्तु प्रथमं समस्ताश्चित्रं प्रशस्तायतलोचनायाः।
तद्वल्कलं भूरिशरीरकान्त्या पीताम्बरश्रीकलितं विभाति[5]।।122।।

फलं च मूलं न हि दृश्यतेऽत्र हा! भोजनार्थं समये कदाचित् ।
शरीरमिष्टं परितोऽतिपुष्टं कान्त्यापि जुष्टं न बतेति दृष्टम् ।।123।।

कोकिलापि विकला विमला या भासते स्वरगतावबलायाः।
भाषणे श्रुतिगते पुनरस्याः किं भवेदिह सुधाजनशस्या[6] ।।124।।

---

1. ०शु मुदा वि०, G.N.J., Pu.
2. सम्मदानाम् = सन्तोषाणामित्यादर्शमातृका स्पष्टयति।
3. व्रजति, G.N.J.
4. दृष्टापि दृष्टेः प्रकरोति तुष्टिम्, G.N.J.,
5. अत्रैव B.H.U. मातृका खण्डिता जाता।
6. सुधानर०, Ujj.

सारसं सखि! विभाति नीरसं यद् रसं रसगतं[1] तमञ्चति ।
अञ्जनेन रहितेऽपि लोचने प्रान्त आयतदृशोऽतिशोभने ।।125।।

स्वाभाविकी देहभवा रुगस्याः संशुद्धचामीकरतुल्यरूपा[2]।
करोति पीतामपि तां धरित्रीं सर्वां धरित्रीभृत एतदन्यत् ।।126।।

वेणी फणीन्द्राकृतिशोभमाना नानाप्रसूनाभरेणन शून्या ।
स्नेहेन [3]हीना पिहितस्त्विषास्याः करोति लीलाः सकला विचित्रम् ।।127।।

नायाति दृष्टिः क्वचिदायताक्ष्या निरन्तरं भर्तृपदाब्जयुग्मात् ।
सुखेऽपि दुःखे कथमास्यमस्या हास्यावृतं[4] पुण्यचयाश्रयायाः ।।128।।

अयं तु देवस्त्वियमेव देवी जातो यतो लोकचयः समस्तः।
नैवान्यथा स्यादतिकान्तिपूरः साधारणे देहभृती[5] जिगिष्णः ।।129।।

एकं परं प्रेयसिकण्ठसूत्रं कण्ठे सुकण्ठ्याः पुनरस्ति भूषा ।
चित्रं लसत्तार-सुहारजाता तत्राप्यतन्त्रा परिलोक्यते श्रीः ।।130।।

मध्योऽतिमेध्याचरणान्वितताया असौ तथा याति च सूक्ष्मभावम् ।
आलोक्यमानोऽपि परप्रयत्नान्नोऽदृश्यभावं व्रजति स्वदृष्टेः ।।131।।

आद्या सदा दैवतवृन्दवन्द्या हन्त्री च निन्द्याचरणव्रजानाम् ।
व्यक्तिङ्गता सापि च कापि शक्तिर्नूनं मदुक्तिर्न कदापि मिथ्या ।।132।।

जानन्तु सर्वा नियमादखर्वा सम्पत्सुपर्वालयवासिगम्या।
भविष्यतीहाचलमौलिदेशे शेषे शयानोऽयममुत्र यातः ।।133।।

लक्ष्मीरियं चेदिह लब्धवासा यासाः कुतः स्युर्भरणे मुनीनाम् ।
ताः सिद्धयोऽप्यत्र च गोत्रराजे सम्पत्समाजेन विकासितारः ।।134।।

---

1. रसगतम् = जलगतमित्यादर्शमातृका स्पष्टयति।
2. ०कान्तिकान्ता, G.N.J.
3. हीनापि दिश०, Pu.
4. ०कुलं भाग्यशतावृताया, G.N.J.
5. क्वापि हि देहभाजि, Ujj.

इयं सुता ब्रह्मनुता पयोधेः प्रायेण जाने जननी जनानाम् ।
अयं न यस्यास्ति जनिर्न चान्तः कान्तः स तस्या भगवाननन्तः ।।135।।

भाग्योदयेनात्र पवित्रपादो जानाति वेदो न हि भावमस्य ।
तिष्ठेदयं चेच्च दिनानि सप्त पञ्चप्रपञ्चप्रतिमा कुतो नः? ।।136।।

अद्यागतं पापमशेषमन्तं जातं पदो दर्शनमीश्वरस्य ।
जाताः सभाग्याः सकलाश्च योग्याः मुक्तावपि प्रोचुरिदं विरक्ताः।।137।।

विधीयते यत्र सदा विवादो वेदोदितज्ञानकलामलाङ्गैः।
निर्धार्यमार्यैर्न हि यस्य रूपं त्रैलोक्यभूपं तमवैम्यरूपम् ।।138।।

कर्त्ता जनानामयमेव भर्त्ता किं चापि हर्त्ता त्रिगुणा गुणोऽपि ।
अस्या अपापा बहवो न पापा सा चादिमाया स्वनियोगकर्त्री ।।139।।

विष्णुः सहिष्णुः स्वजने विधातुं सुखान्यलं भूमितलङ्गतो यः ।
अयं स्वयं प्राप्य मनुष्यकायं यातोऽन्तरायं च निहन्तुमत्र ।।140।।

पदद्वयं तद्वयमस्य सर्वाः पुनः पुनश्चेत् शिरसा स्पृशामः।
भवेद् भवः पुण्यचयैः कृतार्थः प्राप्यस्ततोऽर्थश्चरमोऽप्यवश्यम्[1] ।।141।।

यस्य स्मृतेः पापिजनाः लभन्ते तत्स्थानमन्तेऽप्यमरैरगम्यम् ।
सोऽयं हरिर्दैवतवृन्दपालः सुरारिकालः कमलामलाक्षः।।142।।

नो कङ्कणाली कलिता तथापि वाहोरहो कोऽपि सहो विशेषः।
विलोकनीयः कमनीयकान्तेः स्वान्तेषु यो नो वितनोति तोषम् ।।143।।

मन्दं कथं भूमितले पदानि ददाति चातुर्यशताङ्कितानि ।
जानेऽहमस्याश्चलनेषु हंस्यास्तस्याश्च दास्याधिकृति र्न वै स्यात् ।।144।।

दन्तच्छदोऽस्याः प्रमदोदयं नः करोति भूयो रुचिरः स्वभावात् ।
अलं जितो येन च कुङ्कुमस्य रागो न योगोऽत्र च रागहेतोः ।।145।।

एते विचाराः विरमन्त्वपाराः लक्ष्मीशमारादपि वर्त्तमानम् ।
आलोक्य कुर्वन्तु विलोचनानां सुलोचनालोचनवर्यभावम् ।।146।।

---

1. चरमोऽर्थः = मोक्षः, इत्यादर्शमातृका स्पष्टयति।

काश्चित्पुनश्चिद्घनभावविज्ञा अज्ञानमूलोद्दलनप्रवीणा ।
आमील्य नेत्रे अभवंश्च गोत्रे रोमाञ्चिताः प्रेमभरेण तूष्णीम् ।।147।।

ततिर्नतीनां भवतेऽवतेऽस्तु तुभ्यं सदा लभ्यपदाम्बुजाया ।
भवाऽभवत्त्वत्पदभावनानां भवा भवायेत्यवदत्समस्ताः।।148।।

मातर्नमस्त्वच्चरणाम्बुजाय ब्रह्मादिदेवैः सततं स्तुताय ।
शिवं कुरुष्वाखिलदेहभाजां सदा शिवे चोचुरिति स्त्रियस्ताः।।149।।

एवं विकल्पान् परिकल्पकल्पान् तस्मिन्ननल्पान् मुनयः सतल्पाः।
जातप्रमोदाःगतसर्वखेदाः निर्यातभेदा अभवन् कृतीशाः।।150।।

महीधरस्यापि [1]महीतलस्य प्राप्तं फलं दैव! महीरुहेण ।
नो चेत्कथं [2]रामपदाम्बुजेन धात्राप्यगम्येन समागमःस्यात्? ।।151।।

रामाज्ञया तत्र पवित्रदेशे किञ्चित्सदेशे सदसां मुनीनाम् ।
चक्रेऽनुजस्सुन्दरपर्णशालां मध्ये विशालां प्रसवैस्तरूणाम् ।।152।।

ज्ञात्वा महान्तं पुरुषं तमेतैर्जातैस्तनोः श्रीनिचयप्रचारैः।
[3]ध्यात्वान्तरे [4]पावनपादपद्मं दूरात्प्रणेमुर्मुनयः समस्ताः।।153।।

मन्दाकिनी–पुण्यसरित्पयोभिः कृताभिषेकः प्रयतो जितात्मा ।
सीतानुजाभ्यामगमन्मुनीनां पादप्रणामाय रघुप्रवीरः[5]।।154।।

रामः पदालोकनपूर्णकामः सहानुजेनापि सलक्ष्मणेन ।
पत्न्या च सीताभिधया प्रणामान् करोति सर्वे कृपयन्तु सन्तः ।।155।।

उक्त्वा पुरस्तादिति लोकनाथोऽप्यनाथभावं कलयत् किलैष ।
बभूव भूमीतललग्नकायः पादाम्बुजाय प्रणतीर्वितन्वन् ।।156।।

---

1. धरा०, Pu.
2. देव०, Ujj.
3. स्वीया०, G.N.J., Pu.
4. सुन्दर०, G.N.J., Pu.
5. स रामचन्द्रः, Ujj.

कृतप्रणामाय सलक्ष्मणाय श्रीरामचन्द्राय सवल्लभाय ।
लभस्व कीर्तिं शिवमूर्त्तिशुद्धामित्याशिषं ते मुनयो वितेनुः।।157।।

प्राप्तं फलं राम! तपो विशाल-शालेन कालेन चिरेण नोऽद्य ।
केनाप्यदृष्टोऽपि च दृष्टिमार्गं यतो गतोऽसीति च ते तमूचुः।।158।।

दृष्ट्वा प्रहृष्टाः सकलाः मुनीशाः देशाद् गिरेर्यः कुरुते सकाशात् ।
तं रामचन्द्रं गतमोहमुद्रं चक्रुः कृतार्थां स्तुतिभिः रसज्ञाम् ।।159।।

चित्ते सदा तिष्ठ वरिष्ठमूर्त्ते! रामाखिलार्तेर्भविता विनाशः।
देया मुनीनामियमद्य भिक्षा नान्यास्त्यपेक्षा चरणे रतानाम् ।।160।।

जज्ञे यतो विश्वमिदं च यज्ञे सुज्ञेन पूर्वं परिपूज्यते यः।
त्रैलोक्यधामा हृतपापनामा रामाभिधानोऽयममेयभूमा ।।161।।

यत्रापदस्ता न हि केन शक्या वक्तुं त्रिलोक्या अपि नायकेन ।
तन्नावलोक्यं जठरं जनन्याः श्रीराम! नान्या भवतोऽर्थना नः।।162।।

भवसिन्धुनिमग्नानां सर्वेषामपि देहिनाम्।
तरणे तरणिर्नान्या क्षमा रामपदादिह।।163।।

स्मरानिशं मानस! राममेकं कुर्वेऽप्यनेकं भ्रमतोऽर्थनं ते ।
विना न रामं भवभीमखेद - निर्मूलविच्छेदविधौ पटीयान् ।।164।।

पारो न ते रामपते! महिम्नः संप्राप्तपापा अकृतानुतापाः।
कृताङ्घ्रिचिन्ता हृतदुःखकुन्ता अन्तेऽप्यनन्ताश्रयमाश्रयन्ते ।।165।।

अनाथनाथं किमहं वदामि विश्वेश! विश्वान्तरलब्धवासम् ।
मग्नस्य संसारविपत्समुद्रे यात्रा न मे राम! गुरोऽपरोऽस्ति ।।166।।

त्रातस्त्वया राम! महाविपत्तेः नृसिंहरूपेण सुतोऽसुरस्य ।
आगत्य लोकादपि स स्वकीयात् कस्मादुदासीन इहासि दीने?।।167।।

कारुण्यसिन्धो ममतैव बन्धो! महान् यतोऽन्धोऽयमपीद्धचक्षुः।
तामेव दूरे कुरु रावणारे! मोहान्धकारे यतोऽस्य पातः।।168।।

सुन्दरं रघुपते! तव नाम पापतापनिकरं च निहन्ति ।
श्रीभरं यदपरं वितनोति किञ्च संसृतिदरं विधुनोति ।।169।।

पूर्वजन्मजनिताघमण्डली कुण्डलीश! कुलतोऽपि भीषणा ।
मामियं भयमयं प्रबाधते सद्गते रघुपते! भव प्लवः ।।170।।

निरन्तरं ये निरता विधानेऽप्यनेकसंख्यायुतपातकानाम् ।
अन्ते स्मरन्तो हृदि रामनाम के के न धामप्रयतं प्रयाताः? ।।171।।

वृथा न लोकाः परियान्तु खेदं त्यजन्तु भेदं बहुभावनाभिः ।
किन्त्वन्तरे मञ्चतलस्य सुप्ता रामेति गुप्तागतये जपन्तु ।।172।।

चेतः कुतस्त्वं कुरुषे समन्तात् परिभ्रमं विभ्रमहेतुभूतम्? ।
सेवस्व दुःखोद्दलनेष्वमन्दं श्रीरामचन्द्रस्य पदारविन्दम् ।।173।।

मुखं सुखं तत् विदधाति दृष्टं किञ्चाप्यनिष्टं प्रणिहन्त्यदृष्टम् ।
ददाति चाभीष्टमपि प्रकृष्टं यत्रातिमिष्टं रधुनाथनाम ।।174।।

माया-महाजालसमाकुलोऽयं जानाति किञ्चिन्न ततो विधेयम् ।
प्रयाति भीतिं भवतो ह्यभीतिः श्रीराम! देया शरणागताय ।।175।।

निपत्य भूमौ सह राघवाङ्गैः कुर्वे प्रणामानपि वीतसंख्यान् ।
भूयात्तथा मे न कदापि कालो यत्रास्मृतिस्ते पदपङ्कजस्य ।।176।।

ध्यानात् प्रयाते हृदयान्तरालं रामो ममालम्बनमेव चेतः ।
नायाति कुत्रापि पयोदमित्राकृतिप्रतीक्षारसलालसं सत् ।।177।।

नामरैर्मेऽपरैरर्थः कुतोऽसारतरैर्नरैः ।
एकमेवाश्रये रामं यतः कामं परं श्रये ।।178।।

यतो यान्ति मृतिर्नाशं स्मृतिःरामपदस्य सा ।
क्रियते न कुतो मूढ! या च रूढपदप्रदा? ।।179।।

चेतो ममालं विषयेषु लोलं रामानुकूलं चरणे विधेयम् ।
प्रपन्नदुःखोद्दलने कृतान्तं याचे भवन्तं कृपणो नितान्तम् ।।180।।

यत्पादचारुकमले विमलेऽस्तचित्ता
वित्ताश्रयाः कविवराः भ्रमराः प्रसक्ताः ।
दुःखान्धकारसविताप्यवितासनोऽस्तु
रामःस्वनामपरिशोषितदोषराशिः ।।181।।

बद्धश्चेद् हृत्पशुः कीले नीलेन्दीवररोचिषः।
ध्याने जाने जनेऽनेन विजने भविता सुखम् ।।182।।

सक्षताद रक्षतात् साक्षात् रक्षःकक्षा-शुशुक्षणिः।
अलङ्कारश्च लङ्काया अलङ्कायाद् वियोजितः।।183।।

प्राप्याप्यत्र पवित्रभूसुरतनुं नैवातनुं तन्वते
धर्मं कर्मविचारचञ्चुरतरान्संसेव्य विद्वद्वरान् ।
किञ्चाखण्डलदेवमण्डलनुतश्रीरामपादोन्नत-
ध्यानाक्षिप्तभवोद्भवानपि बुधान् धिक् तान्मनुष्याधमान्[1]।।184।।

वादान् वदेयुर्जनितावसादान् केचित्प्रमादादतिकोविदास्ते ।
सिद्धान्तवेत्ता प्रवदामि तत्तान् भवस्य भेत्ता रघुनाथ एव ।।185।।

त्वं पूजनीया परिवर्णनीया सद्वन्दनीयाऽसि सदा रसज्ञे! ।
संसारवारान्निधितारकाणि नामानि रामस्य वदस्वखण्डम् ।।186।।

आसक्तिरत्राङ्गबुधैश्च कुत्राप्येतैः स्वपुत्रादिषु नो विधेया।
चेतो यतोऽतः सकलप्रपञ्चाद् विव्याध दिव्याधिप एष रामः।।187।।

आननं काननं तत्तु दुष्पदश्चापदास्पदः।
यत्राभिरामरामाख्य-विख्याता न चरन्ति चेत्?।।188।।

तैरेव हासः सहसं निवासस्तेषां च भूयादयमङ्घ्रिदासः।
येषां मनो रामपदे सदे तत् पद्मोपमे षट्पदभावमेति।।189।।

राजते भक्तराजः स यस्य रामस्मृतिर्भवेत्।
गात्रं रोमाञ्चितं नेत्रं सजलं विकलं वचः।।190।।

पश्चादपि पुरो यस्य पार्श्वयोरन्तरेषु च।
रामचन्द्रः स्फुरद्रूपस्तस्य ज्ञापः कुतो भवेत्?।।191।।

रामध्यानसुधासार - पूरपूर्णोदरस्य मे।
कथं यातूदयं वाञ्छा दुच्छास्वादान्नभोजने?।।192।।

---

1. ०भिधान्, Ujj. I.O.

दयानिधे! राघव! सन्निधेहि क्षिप्रं दयां हा! मयि दुर्विधेहि।
अनन्तसंसारजलाशयान्तस्तरङ्गसङ्गोदितसम्भ्रमेण ॥193॥

तात राम! भवतःपदयुग्मान्नैव मेऽस्ति शरणं परमन्यत् ।
ज्ञातमेतदखिलं करुणाब्धे! किं फलं पुनरलं गदितेन? ॥194॥

स क्षणो रक्षणं नैव करिष्यति ममात्मनः।
प्रवदेत् यत्र नो जिह्वा रामरामेति जीवनम् ॥195॥

नान्यः कृपानिधिः रामात् लोके कोऽपि विलोक्यते ।
कर्त्ताऽसंख्यापराधानां येनायं रक्षितः पदे॥196॥

सत्यं प्रिये त्वां प्रवदामि जिह्वे! नामानिशं त्वं पठ राघवेति ।
तद् वैपरीत्ये प्रकरोमि घातं किञ्चापि पातं स्वनिवेशतस्ते ॥197॥

पुनः पुनरहं याचे प्रणिपत्याखिनान् सुरान्।
अनिशं मे भृशं भूयाद् रामनामपदस्मृतिः॥198॥

यस्मिन् जटाः पीतपटावरुद्धाः बद्धाः समन्तात् शुचिना गुणेन ।
[1]श्रीमौलिदेशं शुचिरत्नभूषं ध्याये सतोषं रघुनन्दनस्य ॥199॥

केनापि पुण्येन हि केऽपि यान्तु मनीषिणः कानपि पुण्यलोकान् ।
अहं तु नाम्नैव रघूत्तमस्य यास्यामि पारं भवसागरस्य ॥200॥

सखे! सुखेनाकुलमानसोऽहं निरन्तरं स्वान्तरदत्तदृष्टिः।
केनाप्यनेकेन वृषोच्चयेन पश्याम्यखण्डं हृदि रामरूपम् ॥201॥

कथं दुःखेष्वयं लोकः स्तोकादेव निमज्जति?।
एतद् ह्येयं मनो देयं ध्येये रामपदाम्बुजे ॥202॥

ब्राह्मणः पतितः कोऽपि पादयोर्हतखेदयोः।
समूचेति शमी वृद्धः दशमीदृशमीश्वरम् ॥203॥

---

1. शम्पानुरूपा विलसत्स्वरूपास्तं राममौलिं सततं स्मरामि।। Ujj.

धिक् तां वृद्धतां पुंसो यस्यामपि भवत्यसौ ।
विमुखो रामचन्द्रस्य भजने च जने रतः।।204।।

व्यर्थमर्थार्थिने राम! मया नीतं नवं वयः।
किं करोम्यधुना वृद्धः सिद्धः स्वीकरणेऽक्षमः।।205।।

बाल्ये मूढमतिः पयोधररसास्वादैकतानाशयः
कौमारे वयसि स्पृशद्रतिरसं लीलाविधौ बालके ।
तारुण्ये स्मरबह्निकीलविकलस्वान्तो नितान्तोन्मदो
हा! वृद्धः प्रकरोमि किं रघुपते! ताताधुना त्राहि माम् ।।206।।

शक्तिर्व्यक्तिमुपागता करपदे सर्वापि सा निर्गता
चक्षुर्दिक्षुविलोकनेति चतुरं त्यक्तं रुचा स्वीयया।
कायश्चायमनन्तकान्तिनिलयः सोऽप्यागतः क्षीणतां
हा! वृद्धः ..................................................।।207।।

नाहर्त्तुं तव पूजने शुचिजलं शक्तो विविक्ते स्थले
स्थातुं त्वत्पदपद्मचिन्तनविधौ बद्ध्वा क्षणं चासनम् ।
वक्तुं श्रोतुमथातिपावनकथा गाथास्तथा सत्पथात्
हा! वृद्धः ..................................................।।208।।

वातः प्रातररङ्करोति तुदनं देहे ततो नो बहि-
र्गेहात्किञ्चिदपि क्षिपामि चरणं चित्रं परं श्रूयताम्।
नीरं नाचमने हिताय शिशिरं तद्वै कुतश्चाप्लवे
हा! वृद्धः ..................................................।।209।।

लालानां वदने निरीक्ष्य सततं मालाः प्रहासाकुलाः
जायन्ते तनुजास्त्यजन्ति च निजाः सङ्गं यथा वैरिणः।
काठिन्यं कुरुते नतेऽप्यविनता कान्ता कृतान्तादपि
हा! वृद्धः ..................................................।।210।।

कम्पो रङ्कमनङ्कचन्द्रविलसत् कीर्त्तेः परं बाधते
वात-ब्रातहतान्तपादपशिखा लोलप्रतीकावलिः।

किञ्च च्योतति सर्वमेव करतो यत्नादपि स्वीकृतं
हा! वृद्धः ..................................................||211||

साकं तत् हनुना प्रयाति चिबुकं मध्ये सुखं चर्वणे-
ष्वन्ताद् दन्तचयस्य हासजननं यच्चासनं शोभनम्।
किञ्चाक्ष्णोर्युगलं निरन्तरजलं घ्राणं मलव्याकुलं
हा! वृद्धः ..................................................||212||

तृष्णा वृद्धिमुपैत्यलं घनरसैर्वल्लीव सल्लीलया
तोषं याति कदापि नैव हृदयं जन्तोर्विमन्तोर्यथा[1]।
स्वान्तं भ्रान्तिमुपागतं न च हितं जानाति किञ्चिन्निजं
हा! वृद्धः ..................................................||213||

नो राम! प्रियनामकामनिचयप्रत्यर्पणाग्रेसरं
दन्तानां क्षयतः स्फुटं पठति सा जिह्वातिजिह्माकृतिः।
किञ्चान्यत् कुरुते प्रलापमनिशं तोषं जनाख्यावले-
र्हा! वृद्धः ..................................................||214||

कर्णान्तं समुपेत्य कौतुकपरैः प्रोच्चैः समुक्तं वचो
बारम्बारमपि प्रणष्टविधिना नो किञ्चिदाकर्ण्यते ।
क्व त्वं तच्च पुराणपुण्यवचनाद्याकर्णनं दूरतो
हा! वृद्धः ..................................................||215||

वासः कासकृतप्रयासविकृते मेऽसत्कृतेरङ्गतः
कुत्राप्यञ्चति किञ्च कुञ्चिततनोर्नान्यस्तनोत्यावृतिम्।
लज्जायाप्यभवत् पुरा मयि परा सा राक्षसैर्भक्षिता
हा! वृद्धः ..................................................||216||

पृष्ठं वक्रतरं तथा कटिररं दृक् चाप्यधस्तत्परं
गच्छन् यः परिपृच्छ्यते निपतितं किं रे क्षितौ तावकम्।
क्रीडन्तोऽनुगता हसन्ति सकला बालाश्च कोलाहलै-
र्हा! वृद्धः ..................................................||217||

---

1. मन्तुरपराधः, इत्यादर्शमातृका स्पष्टयति।

चित्रं मित्रजनैरयं परिहृतो दूरीकृतोऽप्याश्रितैः
किं चान्ते सदनस्य तैरविनतैर्द्वेषादृतैः स्थापितः।
त्यागेऽत्रापि कफस्य रेफमतयः कुर्वन्ति कोलाहलं
हा! वृद्धः ..........................................।।218।।

देयं नीरमधीरलोचनयुगे कान्ते नितान्तं पुन-
र्दासस्ते परिपीड्यते बत तृषा रङ्के मृषा किं रुषा ।
इत्युक्तेर्न कथं मृतिं त्वमधुनाप्यायासि वक्ता त्वसौ
हा! वृद्धः ..........................................।।219।।

प्राणाः व्याकुलतां प्रयान्ति च बहिर्गन्तुं प्रयत्नं परं
कुर्वन्त्यन्तरतः प्रिये बहुविधाः बाधा-क्षुधा जायते ।
श्रुत्वा मद्वचनं शठातिकठिनं ब्रूते शिलाः खादता
हा! वृद्धः ..........................................।।220।।

पुत्रः शत्रुसमानभावमनिशं दीने मयि प्रेक्षते
नो वक्तिः प्रियभाषितैः शतमितैः किञ्चिद् वचो मामयम् ।
आयुर्भूरितरं न चैव रुचिरं दत्ते हसन्नुत्तरं
हा! वृद्धः ..........................................।।221।।

स्वीयेनैव मया श्रुतं श्रुतियुगे नैतद् बहूनामहो
मध्ये गेहमतिस्फुटं प्रवदतां गेहस्थितानां वचः।
प्राप्तस्यास्य पिशाचतां भ्रममतेर्नायान्ति केऽप्यन्तिकं
हा! वृद्धः ..........................................।।222।।

वक्त्रं पाणिपदं पुनर्मुखमिदं वीभत्सरूपास्पदं
जिह्वा चापि तथा वदत्यपि कथा नाना वृथा सर्वथा ।
एतद् वीक्ष्य भवन्ति चान्तरगताः सर्वे प्रहासाञ्चिताः
हा! वृद्धः ..........................................।।223।।

द्रव्यस्यास्य समर्जनेति विहिता क्लेशाः मयाप्याशया
क्षीणायां स्वतनौ भविष्यति मम त्यागाय भोगाय च ।
अद्यैतैश्च सुतैर्हृतं तदमितं मद्दुष्कृतं सञ्चितं
हा! वृद्धः ..........................................।।224।।

अस्ति स्वस्तिमती गृहेषु युवतिः पुत्रः सुता तत्पति-
भ्राता चापि युतः सुतैः प्रविततैर्व्रातैः स्वसम्बन्धिनाम् ।
द्रव्यं चाप्यमितं हितं न विहितं केनाप्यहो! निश्चितं
हा! वृद्धः ......................................................।।225।।

सर्वं द्रव्यमिदं मयैव तनुजाः कष्टैः परैरर्जितं
मह्यं वृद्धतराय नान्नमपि रे किञ्चित्सुखं दीयते ।
एवं साश्रुविलोचने समुदितेऽप्येते हसन्त्युन्मदाः
हा! वृद्धः ......................................................।।226।।

यष्टिर्दृष्टिविवर्जितेन च मया संयाच्यमाना मुहु-
र्वाक्यैर्दीनतरै र्न चैव च कदाप्यानीय तैर्दीयते ।
किञ्चान्यत्कथनीयमीश! वचनं नो किञ्चदेवोच्यते
हा! वृद्धः ......................................................।।227।।

त्रैलोक्याधिपते! निपत्य भवते भूयोऽपि भूयोऽग्रतो
निर्माणाः कुरुतेऽर्थना हतमना नानाधिभि र्हाधुना ।
आयुर्भूरितरं न चैव रुचिरं रम्या मृतिः सत्वरं
जानेऽन्यं च वरं ममाहितकरं दुःखोत्करं गच्छतः।।228।।

सञ्जातकरुणो रामः करुणात्तस्य वाक्यतः।
प्रददावभयं तस्मै प्रणताय नताश्रयः।।229।।

श्रान्ताः स्तुतौ ते रघुनाथ! वेदाः संसारखेदापनयस्य हेतोः ।
का शक्तिरव्यक्तकृते कृतेर्नः स्याद् वर्णने तत् प्रणताः पदाब्जे?।।230।।

एवं सदेवाधिपवन्द्यपादः स्तुतो नतश्चापि स रामचन्द्रः।
सन्तोषयत् तान् विनयावनम्रः कृपा विधेयेत्यसकृज्जगाद ।।231।।

प्रत्याश्रमं पूजितपादपद्मो नानोपहारैर्मुनिभिः स रामः।
अगात् शनैस्तोषजलाशयोद्यत् भङ्गाकुलो वृक्षतटीकुटीरम् ।।232।।

सीतान्तरस्था स्मृतसर्वपूर्वा दूर्वादलश्यामरुचौ प्रयाते ।
वेदीं बहिर्नेत्रजलप्रवाहैरहो! वितेने सजलां धरित्रीम् ।।233।।

पुनर्हसन्ती [1]चरणाम्बुजातं विलोक्य कान्तं रघुनन्दनस्य ।
अग्रेऽभवत् मार्जितनेत्रपद्मा पद्मा यथा पद्मभवोद्भवस्य ।।234।।

रामः कदाचित्परिभूयते चेद् दुःखैः[2] स्वहृद्देशवियोगजातैः।
दृष्ट्वा हसन्तीं पुरतः स सीतां प्रीत्या परीतां मुदमेति सद्यः।।235।।

रामस्य दृष्टिः सकलेषु वृष्टिं करोति मातः सततं सुधायाः।
[3]सा जायते सम्प्रति रोषशोणा व्यालोलकोणा च यतः स्ववार्त्ता ।।236।।

सीतापतिर्यद्यपि सर्ववेद-पुराणशास्त्रार्थविचारदक्षः।
एकेन वाक्येन करोति दूरे तस्यातिदुःखानि स बन्धुराजः[4]।।237।।

तां वीक्ष्य सेवां रघुनाथ! एनं धृत्वोरसोवाच गलज्जलाक्षम् ।
क्वणन्तवेदं भवकोटिभिर्वा दातुं न शक्तः किमु लक्ष्यमाणात्?।।238।।

नैतत् पिता प्रेम करोति बाले कस्मिंश्च काले जननी च काचित् ।
मन्ये तदन्ये सुहृदो वराकाः ये केऽपि राका-शशिशुद्धबुद्धेः।।239।।

त्यक्तं त्वया सर्वमदो मदर्थे नार्थे स्वकीये किमपि प्रवृत्तः।
यस्याः स्मृतावप्युपयाति खेदं चेतो ममेदं विपदं च यातः।।240।।

सर्वं मदीयं रधुनाथपादौ यौ संभवादौ जगतोऽस्य हेतुः ।
चिन्ता यदीया कुरुतेऽतिपापात् सद्यो दुरापार्थनिकेतनानि ।।241।।

यत् शीतलं सीकरतः सुधायाः रसाद् रसालं च रसालजातात् ।
एतद् वचो राम-शुचो विनाशं विधाय तोषं च भृशं विरेजे ।।242।।

करोति पद्माकृतिना करेण क्रूरां सुमित्रातनयः सुसेवाम् ।
श्वासं त्यजद् दुःखभरेण धीरं नीरं दृशोर्मुञ्चति रामचन्द्रः।।243।।

---

1. पदपद्मयुग्मं कान्तस्य रामस्य विलोक्य कान्तम्, Ujj.
2. ० खैर्निजज्ञाति, Ujj.
3. शोणाक्षणादस्ति रुषा जनेन प्रोच्चारितं चेत्स्वजनादि नामा।
   – इति पाठान्तरम्, G.N.J., Pu.
4. सलक्ष्मणोऽपि, G.N.J., Pu.

अद्यापि नो गच्छति राधवस्य राजस्वभावो वसतो वनेऽपि ।
फलादिमातः! सहसैव सर्वं ददाति पूर्वं पुर आगताय ।।244।।

सीतेऽप्यहो! वल्कलमङ्गदेशे तदप्यशेषेश्वर एष रामः।
उत्तार्य तस्मात् वितरत्यनाथे रामेऽत्र नाथे जगतां न चित्रम् ।।245।।

न भूरि दत्तं कृपणाय वित्तं हा! हा! मया वीतदयालवेन ।
एवं वदद् दुःखभरेण रामः श्वासं निकामप्रसरं जहाति ।।246।।

श्रुतं[1] मयेदं किल चित्रकूटे विज्ञाल्ललाटे[2] रघुनन्दनस्य ।
भविष्यतीशो विदिशां दिशानामेषोऽक्षराली लिखितेति[3] धात्रा ।।247।।

उक्तिर्मुनीनामपि तत्र चित्र-तपश्चयानां बहुधा प्रसिद्धा ।
साक्षादयं सर्वभयं सुराणामत्येति यस्मात्स इरि र्हि रामः।।248।।

[4]चित्रकूटगिरिकूटगुहासु दीर्घसुन्दरजटाविकटाङ्गः ।
वैरिवारण-विदारणसिंहो राघवोऽवसदिति क्षितिभूषा ।।249।।

नीताः कियन्तो दिवसाः सुखेन श्रीचित्रकूटाद्रिगुहान्तरेषु ।
रामः समेतोऽनुजजानकीभ्यां मातर्गतो दण्डकमुग्रदण्डः।।250।।

औषधादिव तद्वाक्याद् हृद्रोगस्य विशोधनात्[5] ।
दुःखशल्यं हि कौशल्या-हृदयान्निर्ययौ शनैः।।251।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्य-*
*दिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपाद-*
*शिष्याद्वैतविरचिते तृतीयः सर्गः।।*



---

1. मातः श्रुतं सुज्ञमुखात् त्रिकूटेऽप्येवं ललाटे रघुनन्दनस्य।
लिपिर्विधात्रा लिखिता यदेष दिग्देशराजो भवितारिहन्ता।। – इतिपाठान्तरम्, G.N.J., Pu.
2. विज्ञः = ज्योतिर्विदः, इत्यादर्शमातृका स्पष्टयति।
3. ०ता विधात्रा, Ujj.,
4. अधिकः पाठः, Ujj.
5. ०नाश०, Ujj.; ०नाशनम्, G.N.J.

# चतुर्थः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ॥1॥

[1]याते द्विजाते कौशल्या रामबाल्यादिसत्क्रियाः।
दुःखभारस्रवन्नेत्रा सुमित्रामाह तत्परा ॥2॥

पुत्रेण यद्यप्ययि ते सुमित्रे! विधीयते रक्षणमुत्क्षणस्य ।
तथापि चिन्ता हृदयेऽप्यनन्ता[2] कान्ताननस्येति करोम्यहं किम् ?॥3॥

[3]तद् बाल्यमस्यायतलोचनस्य वयोऽपि कौमारमथाप्यतोऽन्यत् ।
तथापि चित्राचरणानि तस्य पुत्रस्य किं किं हृदये करोति? ॥4॥

जातो यदाऽसौ रघुवंशदीपः सम्प्रोल्लसन्निर्जितमेघकान्तिः।
आगत्य देवैर्नभसोऽन्तरालं प्रसूनजालं परितो विकीर्णम् ॥5॥

किञ्चाप्सरः किन्नरचारुगीतैः स्फीतैश्च वादित्रशतप्रणादैः।
ऋषीश्वराणामपि तोषघोषैर्देशा दिशामुघ्वनिता बभूवुः॥6॥

मातर्धरे देववरेण तेऽद्य प्राप्तावतारेण भरः प्रणीतः।
साकं च[4] नाकालयनायकेन सुखं लभस्वेति च ते प्रणेदुः॥7॥

---

1. अधिकः पाठः, I.O. G.N.J., Pu.
2. ०ये त्वनन्ता, Pu.
3. किं, G.N.J.,
4. समूहेन सुधाशनानां, G.N.J, Pu.

[1]चिन्ता यातु विनाशमाशु भवतः सर्वा सुपर्वाधिप!
क्षोणी दैवतदत्तवित्तमपि तन्निःशङ्कमङ्गीकुरु ।
जातो राक्षसदन्तिदम्भदलने कोऽपि प्रकोपी हरिः
श्रीरामस्त्विति वृद्धसिद्धवचसा मातुः[2] प्रचारा दिवि ।।8।।

अग्रे समग्रेन्दुमुखः सुखानां दाताऽवदाताय तदृक् सदृष्टः।
बालोऽब्जनीलः सुविशालबाहुः प्राहुर्यमेनं मुनयोऽत्र रामम् ।।9।।

आलोकिते तत्र पवित्रनाम्नि रामे सुधाशीतलमञ्जुधाम्नि ।
जातं सुखं यद् हृदये मदीये तच्चाद्वितीये[3] न कुतो द्वितीये?।।10।।

[4]मग्नाहमानन्दमये समुद्रे निर्यातमुद्रे प्रचलत्तरङ्गे।
नासादि किञ्चिद् विदिशां दिशां वा देहस्य गेहस्य जनस्य सञ्चित् ।।11।।

[5]चित्रे सुमित्रे ! श्रवणं प्रदेयमस्मिन् समस्तान् विषयान् विहाय ।
अरीरभद्रामशरीरशोभा चन्द्रप्रभास्वेव मनो मदीयम् ।।12।।

अनन्तरं सुन्दर- सुन्दरोऽयं मयोल्लसल्लोचया व्यलोकि ।
यत्कान्तिजालाकुलदीपमालाः शून्यान्तरालाः सहसा बताशुः।।13।।

निर्मलाः सुखकरा अतिशीता रामचन्द्रमुखचन्द्रमयूखाः।
मानसे मम भजन्ति विकासं पापतापनिवहान्न वहामि ।।14।।

लग्नं पदे तस्य मदेतदन्तः प्रायो मदीयं रघुनन्दनस्य[6]।
हा! कोमलं पद्मदलादलं यन्नान्तोऽपि रामस्य समन्ततोऽस्ति ।।15।।

---

1. अधिकः पाठः, Ujj, I.O.
2. मा सु०, I.O.
3. अद्वितीये = ब्रह्मणि, Ujj.
4. अधिकः पाठः, G.N.J., Pu.
5. दूरीकृतो याभिरलं प्रतापः संसारजातः सकलः सुमित्रे!, Ujj, I.O.
6. हृदयङ्गमेऽस्य, G.N.J.

[1]किं किं कृतं तत्सुकृतैकलभ्यात् पादारविन्दाद् रघुनायकस्य ।
नागच्छदच्छद्युतिमान्[2] विचित्रं कुत्रापि चित्राकुलितं मनो मे ।।16।।

[3]रत्नप्रभा-भास्वरनूपुरेण पूरेण कान्त्या विमलङ्गजायाः।
केनापि सौन्दर्यगुणेन रामात्कुत्रापि गन्तुं न मनो ममैच्छत् ।।17।।

ततः कथञ्चिच्छनकैरवाजीद् दृष्टिर्वरिष्टं सहजप्रभाभिः।
तटं कटेर्यन्निकटे मणीनां गणैर्वरेण्यापि न भाति काञ्ची ।।18।।

रामोदरं मन्दिरमिन्दिराया यत्सुन्दरं हारकरोत्करेण ।
तत्पश्यतामाप दृगन्ततापः प्रायः प्रणाशं किमु तज्जनन्याः?।।19।।

लक्ष्मापि वक्षस्यमलं व्यलोकि लोकाधिराजार्चितयद्वयस्य ।
श्रीवत्सजातं कमलातिकान्तं श्रान्तं [4]यतस्तोषमुपैति चेतः।।20।।

दृष्टो मणिर्यस्तरणिं प्रभानां निकेतनं तं हसति[5] प्रभाभिः।
[6]उरःसरः कान्तिजलेन पूर्णं संभूषयत् कौस्तुभनामधेयः।।21।।

कण्ठो विकुण्ठसदनस्य हि राधवस्य
चेतोहरः करभरैरपि पूरितोऽयम् ।
तारानुकारि शुचिमौक्तिकहारजातैः
कान्तैः श्रियं बहुतरामपि[7] यो विभर्त्ति।।22।।

तापं जयन्ती किल वैयजयन्ती मालामला सत्कमलाकुचान्ते ।
दृष्टा प्रणष्टा शुभया मया सा गलेऽखिलेशस्य पुनः प्रशस्ते ।।23।।

---

1. अधिकः पाठः, Ujj., I.O.
2. प्रतिमान्, Ujj.
3. अधिकः पाठः, G.N.J., Pu.
4. ०तः स्थैर्य०, Pu.
5. सहसाऽतिप्रज्ञा, I.O.
6. चित्राप्सरः, I.O.
7. ०रां विभराम्बभूव, G.N.J.

रामाननं पङ्कजशोभमानं हासोदितश्रीरदरत्नचारु।
नालोकयन्त्या मम चेतसोऽभूत् प्रिये! चिरेणापि वितृष्णभावः।।24।।

रामाननं श्रीसलिलैस्सुपूर्णं सरोऽपि राज्या विलसद्द्विजानाम् ।
तत्रापि नेत्रद्वयमेतदन्तर्लोलं श्रियं मीनयुगस्य धत्ते ।।25।।

घोणा प्रसूनाशुगपुष्पतूणादधोमुखात्सम्पतिताः पुरस्तात् ।
शिलीमुखा ये विलसत्प्रदेशाः क्लेशान्तलेशा मुखजा जयन्ति ।।26।।

भालं[1] विशालं रुचिरान्तशोभं तत्रापि चित्राङ्कितमध्यदेशम् ।
वक्त्राब्जमस्योज्ज्वलकर्णभूषा पूषाकृतिश्रीनिचयैरुदेति ।।27।।

शम्पानुरूपं वसनं वसानः करे दधानः सशरं च चापम् ।
लावण्यपीयूषमहासमुद्रः श्रीरामचन्द्रः पुरतो विभाति ।।28।।

[2]रत्नप्रभाभासुरनूपुरादि-भूषासमूहेन विभूषिताङ्गात् ।
केनापि सौन्दर्यगुणेन रामात् कुत्रापि गन्तुं न मनो ममैच्छत् ।।29।।

ज्ञातं मयायं जगतामधीशः शेषाङ्गशैय्याशयनप्रवीणः।
नारायणो भक्तपरायणत्वात्प्राप्तोऽवतारं सदने मदीये ।।30।।

नाथाप्रगल्भा स्तवने त्वदीये दिव्याकृतिप्रेक्षणमुद्भ्रमा सा।
योगप्रयोगैरपि कर्मयोगैर्दुःप्राप्यमङ्घ्रिं शिरसा स्पृशामि ।।31।।

त्वन्मायया मोहमहं प्रणीता तेनाब्रुवं दैवतदैवमेवम् ।
त्वं याहि बालत्वमबालकीर्त्ते! मूर्त्तेः समीहे परिरम्भणानि ।।32।।

विद्युत्समुद्यन्महसा स्वरूपं दृष्टञ्च जुष्टं परमश्रिया यत् ।
कुत्रापि यात पुरतोऽतिकान्तं वपुः शिशोर्वीक्षितमुद्दृगन्तम् ।।33।।

धृतः कराभ्यां हृदयेन बालः कालोऽपि यस्माद् भयमेति नित्यम् ।
रुदत्स्वरेणामृतसोदरेण तदा मयाऽमानि भवः कृतार्थः।।34।।

---

1. भालञ्च बालेन्दुसमान॰, G.N.J., Pu.

2. अधिकः पाठः, Ujj., I.O.

[1]दृष्टिद्वयं बद्धमतीव येन देवैर्नतेनाखिलकामपूर्त्त्यै।
बालस्वभावाद् रघुनायकेन जाने धृतोऽन्तः किमु भुक्तिमुक्ती:?।।35।।

दृष्टः सुहृष्टाक्षियुगेन रामो धामोच्चयैः पूरितदिक्प्रदेशः।
राज्ञा तदा तस्य सुखोच्चयस्य वक्तुं न पारो हि मयास्ति शक्यः ।।36।।

आसीद् यदेतद् द्रविणं स्वकोषे तोषेण पूर्णः ससुवर्णवर्णः।
राजा ददौ तुष्टमनाः द्विजानां वृन्दाय कुन्दामलहासवक्त्रः।।37।।

मानं [2]महानन्दभरोदयस्य लोकस्य नासीन्नगराश्रयस्य ।
विप्राश्चिरप्रार्थितजातलाभाः शोभान्दधुः सौधपुरो धरासु ।।38।।

बालः प्रवालारुणपाणिपादः खेदोच्चयध्वंसनहासलेशः।
जातो जनानन्दसमुद्रभङ्गदिग्देशसङ्गेष्वभिरामचन्द्रः।।39।।

बालभूषणविभूषितदेहः स्नेहमार्जनविशेषितकान्तिः।
किङ्किणीचयविराजितपादो [3]खेदभेदनमधात् शिशुरामः।।40।।

स बालचन्द्रः पृथुभालचन्द्रः [4]उन्नीद्रनीलाम्बुजनेत्रभद्रः।
संवर्द्धयत्तोषमशेषलोकै र्वव्राज वृद्धिं किमु नव्यचन्द्रः?।।41।।

धृत्वोरसा राममलं निशासु करोमि सर्वासु सुखेन निद्राम् ।
किञ्चाकृतं तत्सुकृतं मयाऽद्य न ज्ञायतेऽन्तोऽपि पुनस्तदीयः।।42।।

[5]प्रातः पुनः संश्रितपुण्यकर्मा विज्ञातधर्मा तमुदारहासम् ।
वक्षःप्रदेशेऽप्यमुमेव रामं निधाय लेभे जगतो विरामम् ।।43।।

---

1. अधिकः पाठः, I.O.
2. तदा०, Ujj., I.O.
3. वीक्षितो मुदमदान्मम, Ujj, I.O.
4. श्रीरामचन्द्रः कृतसर्व०, Ujj., I.O.
5. प्रातः स तातः स्मरतां स्मराङ्गः स्मेरोल्लसद्वक्त्रसरोजकोशः।
   अपेतनिद्रः शयनेऽतिभद्रः खेलन्मुदोऽदान्मम रामचन्द्रः।।
   — इतिपाठान्तरम्, G.N.J., Pu.

कदाचिदानन्दमयो मयोद्यत् प्रेमप्रपूराकुलया प्रभाते।
श्रीरामचन्द्रः परिलब्धनिद्रः शोभासमुद्रस्त्विवति बोधितोऽयम् ।।44।।

प्रातर्लीलास्वलं [1]लोला दोलान्दोलननिद्रितम्।
राममर्थयते माता जाताकाङ्क्षावबोधने।।45।।

बोधं याहि सुधांशुसुन्दरमुख! श्रीरामचन्द्राधुना
निद्रोन्निद्रसरोजनेत्र-भजतामेषापि संपूर्णताम् ।
प्रातर्जातमिदं मुदं प्रतनुतां त्वत्खेलनैः पश्यतां
सोत्कण्ठानखिलानिमांस्तवजनान् स्वीयैः प्रियैः पूरय ।।46।।

बोधं प्रयाहि रघुनाथ! दयापयोधे!
स्वाधेर्भविष्यति ततः सकलस्य नाशः ।
वेदा हृदाऽविरलमञ्जुलबाललीला-
जालानुवर्णनधियः परितो भ्रमन्ति ।।47।।

श्रीरामबालघनजालसुनीलमूर्त्ते!
पूर्त्तेर्निदानमसि संश्रितकामनानाम् ।
त्वद्वक्त्रचन्द्रशुचिहासकरप्रचारो
मच्चित्तकैरवदलोल्लसनं करोतु ।।48।।

उत्तिष्ठ दुष्टजनकष्टकरेष्टराम!
त्वद् बालभाषणसुधाप्रचुरप्रचाराः।
कुर्वन्तु तापमखिलं श्रवसोर्विदूरे
सूरेण सम्प्रति दिशां क्रियते प्रकाशः ।।49।।

सत्यं मुदा भवदुदारपदारविन्दं
रागानुकारि-किरणैररुणोरुणान्ताम् ।
देवेशपालितदिशां विदधाति घात-
स्ताताद्य राम! भवतो भवतु प्रबोधः।।50।।

---

1. लोला=सतृष्णेत्यादर्शमातृका स्पष्टयति।

विश्वम्भरस्य तव राघव! नैव निद्रा
विद्राविघातनिचयस्मृतितो हिताय।
तातो भवानपि तथा जननीजनानां
मज्जीवनञ्च रघुनाथ! लभस्व बोधम्।।51।।

कीराश्च राम! तव पावननाममाला
उच्चार्य वर्यवचसा परिबोधयन्ति ।
दत्वा श्रुतिं श्रुतिविशारदशारदेन्दुं
कीर्त्ते! शृणु व्रज च बोधमबोधशत्रो! ।।52।।

आस्ते बहिर्दशरथोऽपि मनोरथोऽस्य
रामास्ति संश्रृणु गुणालय! पूरयामुम् ।
निद्राविरामरुचिरं सुचिरं न दृष्टं
प्रेष्टं मुखं तव सुखप्रदमीक्षणीयम् ।।53।।

एतत्सरोजदलकोमलशीतलाङ्ग-
मालिङ्ग्य राम! पुनरिच्छति चित्सुखानि ।
किञ्चास्य सुन्दरंतवास्यसरोरुहस्य
सच्चुम्बने समुदितः परमोऽनुरागः।।54।।

उन्मीलनं कुरु दृशोर्बहुशो मदीया
त्वामर्थना विमलखेलनलालसेयम्।
त्वत्खेलनार्थमपि किञ्चिदपूर्वमेत-
दानीतमस्ति परिलोकय राम! वस्तु ।।55।।

सेवार्थं बहिरागताश्च सकला देवेश! देवा इमे
विज्ञप्तिं पतितास्तलेऽपि च भुवः कुर्वन्ति दीनाननाः।
उद्बुद्धो भव राघवाद्य जगतामानन्दसम्पत्तये
रक्षोवृन्दममन्दसत्त्वकुरुते चारं पुनर्मारय ।।56।।

इन्द्रश्चन्द्रमुखायते रघुपते! कृत्वा प्रणामान् बहून्
भूमीसङ्गरजोऽवगुण्ठिततनुर्विच्छाय-वक्त्राम्बुजः।
वक्ति व्यक्तिमुपागतोऽसि भगवान् साक्षाज्जगद्गुप्तये ।
योग्या तस्य न सुप्तये रतिरिति प्रक्लिन्ननेत्राञ्चलम् ।।57।।

ब्रह्मा जिह्मकलेवरः प्रणतिभिश्चिन्ताशतेनावृतो
बूते राम! कुरूपदेशमपि मे संक्षीणबुद्धेः कृतौ ।
कालो व्याकुलवच्च तिष्ठति बहि र्न ज्ञायते कारणं
रोधे बोधमबोधबोधजनक! त्वं पाहि पाहि स्वकान् ।।58।।

भूमिर्भूमिपते! करोति सुमते! स्थित्वान्तिके याचनां
श्रीरामस्मृतिमात्रनाशितमहापापोपपापोच्चयः।
गुप्तिर्भूवलयस्य सादरतया कार्या न सुप्तिस्त्वया
भक्तान् प्रेमरसावलोकनसुधासेकैश्च सञ्जीवय ।।59।।

स्तोत्रं गोत्रमुदीर्य राम! भवतः कुर्वन्त्यपि प्रार्थनां
[1]नानासत्यवचश्चयाश्च विनयानम्रोत्तमाङ्गा पुरः।
लङ्कायाः पुर ईश्वरो विधिवरो नद्धः प्रसिद्धः खलो
लोकान् शोकयुतान् करोति करुणासिन्धोऽस्तु बोधोऽधुना ।।60।।

एवं निशम्य जननीवचनं सुमित्रे!
मित्रे च किञ्चिदुदयोन्मुखतां प्रयाते।
रामः स्वकामपरिपूरणरूढशीलो
लीलोडुपाहितविलोचनमन्वपश्यत् ।।61।।

इत्युक्ते भक्तियुक्तेष्टो रामो मङ्गलदर्शनः।
शनैरुन्मीलितदृशा दिशादेशानलोकयत् ।।62।।

श्रीरामोऽखिललोकशोकतिमिरप्रच्छेदिचन्द्रोदय-
स्त्यक्तः सम्प्रति निद्रया बत तया दैवोदयाद्देहिनाम् ।
किं किं नो भविताद्य मङ्गलमिलल्लोकेपि नाके पुनः
सानन्दा विदधुः सुरा अपि वरा वादित्रनादान् दिवि ।।63।।

रामचन्द्रमुखं तात! प्रातस्ते तनुते सुखम्।
किञ्चित् कुञ्चितनेत्रान्तं निद्रामुद्रामनोहरम्।।64।।

---

1. सत्यवचाः=ऋषयः, इत्यादर्शमातृका स्पष्टयति।

प्रातः सतातः स्मरतां स्मराङ्गः स्मेरोल्लसद्वक्त्रसरोजकोशः।
अपेतनिद्रः शयनेऽतिभद्रः खेलन्मुदोऽदान्मम रामचन्द्रः।।65।।

गाढं धृतो वक्षसि रामचन्द्रो बालो विशालाक्षियुगः प्रगेऽसौ
मया प्रियाऽऽस्ये शतसंख्ययापि [1]सच्चुम्बितस्तृप्तमिदं न चेतः।।66।।

ब्रह्मस्मृतं चेद्[2] हृदि कोऽपि तोषः सञ्जायते देहभृतामशेषः।
आकारवत्तद्[3] रघुनाथरूपमालिङ्ग्यते क्वास्तु सुखस्य पारः?।।67।।

आलापमालाऽतिकला रसाला [4]रामाननश्रीकमलात्प्रसूता ।
अव्यक्तरूपाप्यकरोत्प्रतोषमव्यक्तरूपादधिकं श्रुता मे ।।68।।

कुर्वन् गृहान्तेऽप्युरसा रसाया[5] अतिक्रमं विक्रमरुद्धसर्वः।
तोकः सलोकस्य चकार रामः संपश्यतः कानि च कौतुकानि?।।69।।

अव्यक्तमेवास्तु तव स्वरूपं तथा समस्तं करणं च राम! ।
अव्यक्तता ते वचनेऽप्यशक्तै र्भक्तैर्दुरापोऽस्य हसन् मदुक्तेः।।70।।

अङ्के मदीये सुखतो निषण्णो रामो सरोजाधिकशीतलाङ्गः।
मदाननालोकनजातहासो हासोऽकरोन्मे हृदये सुखानि ।।71।।

अङ्कतो याति पर्यङ्कं पर्यङ्कादङ्कमेति च।
एवं चञ्चलता रामे सा मे स्थैर्यं हृदो दधौ ।।72।।

मातृतो याति पितरं पितृतो मातरं पुनः।
एवं गतागते रामे पश्यतां न गतागते ।।73।।

---

1. हा! चु०, Ujj, I.O.
2. सद्, G.N.j.
   सन्, Pu.
3. ० च्चेद्०, Pu.
4. बाला०, G.N.
5. रसायाः = पृथिव्याः, इत्यादर्शमातृका स्पष्टयति।

सत्वरं प्रतिवलंश्च[1] चत्वरे किङ्कराश्रितकरः करेण यः।
सम्पतन्नपि तथोत्पतन् शनैः कौतुकं[2] वितनुतेस्म राधवः ।।74।।

किं जङ्गमो नीलमणिः प्रणीतो जगत्कृता मत्सुकृतोदयेन?।
सौधाङ्गणे रिङ्गणमादधानो रामोऽरुचत् श्यामलदेहकान्तिः।।75।।

आरोपिते पङ्कजशीतगात्रे पुत्रे निजे हा! हृदि रामचन्द्रे।
प्रयात्यशेषं विषमं विनाशं ब्रह्मोत्थतोषं च बताश्रयामि ।।76।।

मध्ये गृहं खेलति यस्य नित्यं श्रीरामचन्द्रो जितकोटिचन्द्रः।
तस्यास्तु वाञ्छा किमु पूर्णचन्द्र-बिम्बे विलम्बेन कृतोदयेऽपि ।।77।।

नित्यं निशायामपि हा! कृशायामानन्दसम्पूरितमानसायाः।
आधाय रामं हृदये स्वपन्त्याः कैः सा विचिन्त्या मम पुण्यपङ्क्तिः?।।78।।

शरीरमेतत् शिशिरं शरीरं श्रीरामचन्द्रस्य कदापि किञ्चित् ।
स्पृशत्यशेषं च तदैव नाशं प्रयाति तापस्य पदेऽवशेषम् ।।79।।

त्रैलोक्यदीपे रघुनाथरूपे गेहान्तरे कुर्वति रिङ्गणानि ।
नासीदपेक्षापि निशासु तत्र दीपस्य नामुत्र विचित्रलेशः।।80।।

आकारितः प्रेमभरेण दूरादुत्सार्य बाहू कुतुकेन रामः।
आगत्य धावन् हृदये विलग्नो मग्नो ममात्मा सुखसिन्धुमध्ये ।।81।।

कदापि नासौ हृदयाद् विदूरे रामस्य देहस्तुहिनातिशीतः।
भवत्विति प्रेयसि! जायते मे तृष्णातिकृष्णाङ्घ्रिनिषेवणायाः।।82।।

वदाम्यदस्त्वामृतमेव वाक्यमत्रास्ति साक्षी स जगन्निवासः।
खेलन्तमालोक्य पुरश्च रामं कामं न कञ्चित् हृदयं ममैच्छत् ।।83।।

गच्छेत् स गेहाद् बहिरन्तरात्मा रामः कदाचिद् रमणाय बालैः।
तस्यैव कुर्वे शपथं सुमित्रे! ममापि [3]तत्रैति मनः सहैव ।।84।।

---

1. ०चलंश्च, G.N.J.
2. ०कानि त०, G.N.J.
3. चेतः सह तेन याति, G.N.J.

भक्तेभ्यः स्वपदं त्वया रघुपते! संप्रार्थितं दीयते
वक्त्रात् साधुजनस्य वेदनिचयादप्येतदाकर्णितम्।
एकं त्वामहमर्थये क्षणमपि प्राणप्रियाऽक्ष्णोर्युगाद्
दूरं नो व्रज वाक्यतो[1]ऽतिविहसन् [2]रामोऽन्तिके खेलति ।।85।।

सीतापतेर्मम कृते सुकृतेन धात्रा
सङ्कल्पितं किमपि जीवनमङ्घ्रियुग्मम् ।
यस्मिन् स्मृतेऽमलमतेर्भवति प्रणाशो
नाशोदयं व्रजति कापि चरामि तृप्ता।।86।।

राजकृत्यमखिलं नरराजः प्रात्यजत्सनिवहे सचिवानाम् ।
रामरिङ्ङ्णगतागतपात[3] - हासखेलनकलाविधिलोलः।।87।।

काञ्चनाञ्चिततलास्वचलासु सद्मनः क्षितिपतेरुपविष्टः।
नीलरत्ननिचयाश्रयशोभां नीलकान्तिरकरोत् किल रामः?।।88।।

राधवः सुरसशैशवलोलः संलसत्करकलेवरकान्तः।
यत्र यत्र कुरुते स्थितिमत्र तत्र तत्र समुदेत्यमिता श्रीः।।89।।

यस्तापराशेः स्मृतितोऽपि हन्ता तस्मिन् धृते वक्षसि रामचन्द्रे ।
करोतु वासं त्रिविधोऽपि तापः कथं कदाचिद् वपुषि प्रिये मे ।।90।।

वक्त्रस्त्रिलोकी मणिरेष लोकैरुद्यद्विवेकैरपि रामचन्द्रः।
स कथ्यते गेहमणिर्मयातिस्नेहान्धया कोऽत्र ददातु दोषम्?।।91।।

कौतुकं न हि कथं महदेतद् [4]यद् गुणव्रजसमाहृतचित्ताः[5]।
संविहाय च जना जननाथं राममेव सततं परिवव्रुः ।।92।।

---

1. ०तोऽपि, Pu.
2. बालोऽन्तरे, Pu.
3. ०हास–पात०, G.N.J.
4. ०न्नु, G.N.J.
   ०त्तद्, Pu.
5. ०वशीकृत०, Ujj. I.O.

राजापि राजोचितशीलमेनं बालं[1] विशालाक्षियुगं निरीक्ष्य।
मेने भवाराधनसम्भवेन पुण्येन जातोऽद्य भवः कृतार्थः ।।93।।

प्रज्ञागुणानामतिगौरवेण कुर्वन् गुरूणामतिकौतुकानि ।
आसाद्य नावं मतिमेव तीक्ष्णां विद्याम्बुराशेरगमत् स पारम् ।।94।।

भाषाविभूषा वचसां कवीनां जागर्ति रामाननमध्यभागे ।
किं वीक्ष्य शत्रुं श्रियमुत्स्फुरन्तीमाक्रम्य वक्त्रोत्तरभूमिभागम् ।।95।।

रामाननालोकनसंप्रवृत्ता दृष्टिः प्रमत्ता परमोत्सवेन ।
स्थिता चिरं तत्र न चित्रमेतत् चित्रन्तु साऽतश्च कुतोऽपि नैति ।।96।।

नामस्मृतेनैव मृतेर्जनानां भयं स्वयं साधुजना वदन्ति ।
तं चाप्यखण्डं हृदि राममेनं प्रेम्णा वहन्त्या न हि दैवमानम् ।।97।।

दृष्टस्त्वया नेत्रयुगेन सर्वस्तद्वर्णने नैव ममास्ति शक्तिः।
रामस्य गोदान-विधानकाले महामहानां[2] निचयोऽत्र वृत्तः।।98।।

आधाय चापं विपुले[3] गलेऽसौ स्पृशन् करेणापि शरं सलीलम् ।
गच्छन् वयस्यै रुचिरात्तवेशो रामः प्रतोषं मनसो[4] ह्यकार्षीत् ।।99।।

असिं वशी पाणितलेन धृत्वा हसन् लसच्छ्रीमुखचारुचन्द्रः।
चलत्सलीलं[5] कलिताग्र्यभूषो रामोऽतितोषोदयमाततान[6]।।100।।

रामः कदाचिद् विधृतेषु चापो धुन्वन् शिरो दक्षिणदेशदृष्टिः।
प्रभूतकोपः प्रबभूव जाने नानेन यच्चेतसि चिन्तितं तत् ।।101।।

---

1. रामं ससेनं पुरतो, G.N.J.
2. ०नन्दचयोऽत्र, Pu.
3. ०पृथु०, I.O.
4. ०सामकार्षीत्, G.N.J., Pu.
5. ०न्सहेलं, Ujj., I.O.
6. रामोऽकरोद् हृद्वहुशीतलं मे, G.N.J., Pu.

रामाननालोकसुधारसौघ-पानातितृप्ता वयमल्पभाग्याः।
जाता समस्तेषु पदेष्वकामा नामाधुना किं कथितेन तेन?।।102।।

जातो यदाऽसौ चतुरः प्रचारे रामः पुरारेरमितप्रसादात्[1]।
[2]तत्पादवीक्षामृतभूरिकामा[3] धामानि पौराः प्रजहुर्निजानि ।।103।।

रामस्य वाणी सुधया समाना नैवोपमा चास्य वदान्यतायाः।
गुणेषु विज्ञस्य कथं त्यजन्तु लाभास्पदं तस्य पदं मनुष्याः?।।104।।

यान्तं कदाचिन्नृपदर्शनार्थं रामं कृशानुप्रतिमं प्रभाभिः।
आरूढवाहं भुजगाभवाहं पूर्णोत्सवाऽहं तमवेक्ष्य जाता ।।105।।

यत्र क्रीडति तोयदाकृतिरयं रामो रमारञ्जितो
नित्यं कृत्यकला-कलापकुशलो लोकावलीपालकः।
कुर्वद्भिस्तवनं निरन्तरमतिप्रेम्णा भरैराकुलं
साम्यं प्राप दुरापमायति पुरः सानन्दपौरां पुरम्।।106।।

उदारतामस्य तदेव दैव-सिन्धोः समाकर्णय राधवस्य ।
संप्रार्थितं केन च [4]किञ्चिदेव ददाति तस्मै सहसा समस्तम् ।।107।।

वदान्यचूडाभरणस्य तस्य जाने[5] धनं कतृणवद् विभाति ।
स्पृष्टं यतोऽनेन[6] करेण किञ्चित् त्यागस्तदीयः क्रियते तदैव ।।108।।

दत्ते न वित्तेश्वर एष भूपः सम्प्रार्थनाभिर्द्रविणं द्विजेभ्यः।
तद्वंशरत्नेन विना प्रयत्नं श्रीरामचन्द्रेण समर्प्यतेस्म ।।109।।

वक्ति प्रसङ्गाज्जगतीशमेष क्लेशो महान् रक्षण इन्दिरायाः।
दानं तदीयं परमं निदानं जाने सुखानामहमत्र तात! ।।110।।

---

1. पुरारेश्चरण०, G.N.J, Pu.
2. तस्याङ्घ्रि०, G.N.J., Pu.
3. दीर्घकामा, G.N.J., Pu.
4. वस्तु किञ्चिद्, G.N.J., Pu.
5. द्रव्यं समस्तं तृणवद्विभाति, G.N.J., Pu.
6. ऽनेक०, G.N.J.

शून्येन दान-भोगाभ्यां द्रव्येन द्रव्यवान् भवेत्।
तत्कथं न जनाः सर्वे द्रव्यवन्तः सुमेरुणा?।।111।।

नृपेन्द्रस्य द्विपेन्द्रस्य गौरवं देवनिर्मितम्।
शोभायां तु परं दानं निदानमुभयोरपि।।112।।

राजन्! रमा चेत् परमापि लब्धा लोकैर्न तोषश्चतुरैर्विधेयः।
दृष्टाप्यदृष्टा सहसा विहारं नीहारवत् सा कुरुते प्रसिद्धम् ।।113।।

धर्मं कुरुष्वानिशमीशबुद्धे! सिद्धेरयं कारणमायतीनाम् ।
श्रेयान् सखा सर्वसुखाद्यकर्त्ता हर्त्तापदामत्र च तत्र लोके ।।114।।

भाग्योदये भाग्ययवता जनेन धर्मो विधेयो न विधेयमन्यत् ।
धर्मं विना नैव कदापि किञ्चित् सहायभावं समुपैति कोऽपि ।।115।।

भानूपरागे हृदि सानुरागे ध्यायन् यदाऽयं जगदीश्वराङ्घ्रिम् ।
ददाति भूमिं सति <u>तीर्थराजे</u> राजेन्द्रभावं स नरः प्रयाति ।।116।।

उच्छलत् सलिलभङ्गभङ्गुरा वागुरा नरकुरङ्गरोधने।
काम्यते किमु रमात्र साधुना साधुनार्णवसुतेन बन्धुना?।।117।।

रे त्वया विमलचेतसा धनं साधनं बहुसुखस्य साधवे।
नार्पितं हृदि विचिन्त्य माधिपं माधिपङ्क्तिजननं वृथा कृथाः।।118।।

पूर्णतां यद्विभजेन्न कामना का मनागपि ममास्तु वेदना?।
किं सदैव निजदैव-नोदिता नोदिताऽभिनवसौख्यसम्पदः?।।119।।

इच्छितं प्राप्यते सर्वैं र्न त्वयैत्यत्र कारणम्।
नोद्गतं विधिवत्पूर्वमपूर्वं ब्राह्मणानने।।120।।

लोलं वयश्चापि चयः श्रियां यः कायः सदायः प्रियतानिवासः।
सन्दृश्यते यत्तदशेषमेवमज्ञेन किं सुज्ञजनेषु वाच्यम्?।।121।।

भोगारयः केवलमत्र रोगा योगाय नैते स्वसुखस्य किञ्चित् ।
क्षणे-क्षणे कालकृतान्तराया नायाति कायादपि कोऽपि लाभः।।122।।

कीटादीनां यथा कायः प्रायः प्रध्वंसभाजनम्।
मानुषाणामपि तथा वृथासक्तिरिहासताम्।।123।।

संसारसिन्धौ पतितेन पुंसा यत्नोद्गतं निस्तरणे विधेयः।
कृते विलम्बे न विनाशतोऽन्यत् सखे! फलं तत्र विलोकयामि ।।124।।

संसारसिन्धौ पतितेन साधो! बहिः कथं निःसरणं विधेयम् ।
प्रेम्णा दृढं स्वीकुरु राम-राम-श्रीराम! रामेत्यभिधानमालाम् ।।125।।

एवं वचोभिश्चतुरस्य तस्य रम्यैः कुमारस्य विचारसारैः।
सिक्तः सुधायाः निकरैरिवासीत् सुशीतचेता जगतीपतिः सः।।126।।

हसन् तदोवाच नृपोऽपि रामं [1]कामं मनोहारि गिरं सुमित्रे!।
लक्ष्मीपतेस्ते न हि किञ्चिदेव देवास्त्यदेयं हृदयेन धृत्वा ।।127।।

वाचां पतिः श्रीपतिना ममायं दत्तः कुमारः करुणाकरेण।
शक्ति र्हि नेयं घटते मनुष्ये प्रेष्यानवादीद् रघुनाथतातः।।128।।

पित्रा तुल्यगुणः पुत्रः कुत्रचित् पुण्यतो भवेत् ।
जनकादधिको यस्तु वस्तुतः पुरुषोत्तमः।।129।।

आकर्ण्य वाक्यानि सुतोदितानि नानार्थसंतानपरिप्लुतानि ।
सुखानि चित्ते प्रभवन्ति यानि नैतानि किञ्चित् क्वचिदेव तानि ।।130।।

तस्यैव संततिः पुण्या पुण्यानामिह संततिः।
येनार्जिता सताऽपूर्वं सर्वतीर्थनिषेवणैः।।131।।

स्मृतं मया यच्छिशुकौतुकं तत् श्राव्यं सुमित्रे! जनचित्रकारि ।
अप्रेरितोऽपि प्रणतिं पदाब्जे देवद्विजानामकरोत् स[2] रामः।।132।।

नेयं गतिर्वृद्धितरे कदापि दृष्टा नरे भूमिसुरेऽमरेऽपि।
रामेऽभवत्सन्ततमन्तरा मे [3]यो भासते किं बहुनोदितेन?।।133।।

---

1. श्यामं पयोदाकृतिवत्, G.N.J., Pu.
2. कराभ्याम्, G.N.J., Pu.
3. सम्भाषते, G.N.J., Pu.

हस्तेऽनुजस्यापि निधाय हस्तं शस्ताकृतिश्चारणवन्दिवृन्दैः।
रामो निदानं परमोत्सवानां गच्छन् ममाभून्नृपमन्दिरान्ते ।।134।।

[1]दत्ता यदाऽस्मै युवराजदीक्षा दक्षाय रक्षाकरणे प्रजानाम् ।
संवीक्षितुं तां श्रियमम्बरेऽपि सहाप्सरोभिर्विबुधाः प्रयाताः।।135।।

असौ कुमारस्तुरगाधिरूढः प्रौढप्रतापक्षितिपा वृतान्तः।
चन्द्रातपत्राञ्चितमौलिरासीच्छ्रीचामरश्चामरराजशोभः।।136।।

त्वामेव वच्मि प्रियताभरेण किञ्चित्सुमित्रे! शृणु तद्वचो मे ।
प्रेमाप्रवृद्धस्तु तथात्र रामे वृत्तान्तरा मे सततं स एव ।।137।।

[2]वक्ष्ये स्वपक्षे परमार्थदक्षे सत्यं परोक्षेऽपि मनोहराक्षे ।
प्रेमाप्रवृत्तः परमोऽत्र रामे वृत्तोऽन्तरा मे सकलः स एव ।।138।।

श्रीरामरामातिमनोरमाक्ष! त्वत्तो न पक्षः परमाश्रितानाम् ।
मध्यं गताया मम दुःखसिन्धोस्त्वं दीनबन्धो! मम कर्णधारः।।139।।

रम्यं यत्र युगं भ्रुवोरभिभवश्चेतोभुवो धन्वनो
येनार्थिक्रियतेऽसुना समधरद्योतिस्फुरत्श्रीरदम् ।
आस्यं हास्ययुतं कपोलविलसत्कान्तिप्लुतं राम! तत्
संसारश्रमराशिनाशि भवताद् दूरे न मेऽक्ष्णोर्युगात् ।।140।।

सीताकान्तकृतान्तभीतिहरणस्मृत्या स्वमृत्यार्पित-
स्वस्थानाप्रतिमानदानकरुणासिन्धो! स्वबन्धो! कथम्?।
क्लिश्यन्तीं बहु मामनन्यशरणां दीनां पुनर्मातरं
जानास्यन्तरगो न सर्वजगतामेतत् त्वयीशेऽद्भुतम् ।।141।।

प्राणा व्याकुलतां प्रयान्ति च बहिर्गन्तुं प्रयत्नं परं
कुर्वन्त्यन्तरतो वियोगविहितो हा! बाधते पावकः।
रामेन्दुप्रतिमाननामलगुणग्रामाभिरामाकृते
शीघ्रं त्वं भव गोचरो मम दृशोरप्येकवारं सखे!।।142।।

---

1. अधिकः पाठः, G.N.J., Pu.
2. अधिकः पाठः, G.N.J., Pu.

राम! त्वं जननी ममासि जनकस्त्वं सोदरः सुन्दरो
जीवस्यापि च जीवनं बत धनं यद् वर्द्धनं श्रेयसाम् ।
मध्ये तुन्दममन्ददाहमभितःकुर्वन्ति दुःखाग्नय-
स्त्वदृष्टी-[1]रसवृष्टिराशु कुरुतादेषां प्रणाशं भृशम् ।।143।।

नापत्यं तव राधवास्ति पुरतो वक्तव्यमेतत् किमु
यद् दुःखं भवतीह तस्य विरहात् पित्रोः सुपुत्रोत्कटम्?।
एतस्यात्र हि विद्यते रघुपते! नो किञ्चिदेवोपमा
ज्ञात्वैवं त्वरया कुरुष्व परया संभावनां मामिकाम् ।।144।।

माता त्वदीया रघुनाथ! याता वल्लीव ताताद्य विचेतनत्वम् ।
वियोजिता केन च जीवनेन रामाभिरामेण कुदैवयोगात्?।।145।।

मिनी यथा कापि जलाद् वियुक्ता युक्ता भवेत्केन च संभ्रमेण ।
इयं तथा रामसुधाविमुक्ता प्रायोऽनुरक्ता विकलत्वमेति ।।146।।

श्रीरामचन्द्रानिशमेव निद्रा नायाति तन्द्राकुलचेतनायाः।
भवामि नानाविपदापि दीना हीना त्वया जीवनजीवनेन ।।147।।

संत्यज्यते राम! जनैः समस्तैः कदाचिदेतत् सकलैर्विरागैः।
त्यक्ता प्रसूर्नैव कदापि केन हा! हाद्य दैवेन कृतं तदैवम्?।।148।।

वियोगतस्ते परितः प्रवृत्तो रामोग्रवृत्तो हृदये हुताशः।
तच्छीतशीतेन भुजद्वयेन प्रेम्णा प्रियालिङ्गनमाशु देहि ।।149।।

देवाः दैवहता नतास्मि पदयोरेषा विशेषातुरा
दुःखौघैः कुरुतेऽर्थनामपि बधूर्दीने दयासिन्धवः।
प्राणाः मे विकलाः भवन्त्यतिमला कीर्णाकृतेर्दुःकृते-
र्गन्तुं चापि समुद्यता ददतु हा! श्री राम! भिक्षां सकृत् ।।150।।

भवार्णवे त्वं रघुनाथ! नौका सत्यं वनौका अवदद् वशिष्ठः।
अहं तु माता विपदं प्रयाता दृशापि तताद्य न वीक्षिता हा! ।।151।।

---

1. रसः = जलमित्यादर्शमातृका स्पष्टयति।

कालहाल! मयि जीवितदानैः सद्भुजेन तनुजेन निजेन ।
राघवेण विधिना विधुरायाः स्वाधिनातिबहुना निहतायाः ।।152।।

राम! रावणरिपो! करुणाब्धे! सङ्गतास्मि शरणं चरणं ते ।
एकवारमपि पारमपार-दुःखक्षीरजलधेर्नय दीनम् ।।153।।

त्वां वदन्ति मुनयोऽपि नयोद्यत् कीर्त्तिजालविमलीकृतलोकम् ।
रामधामजितभास्करकान्तिं श्रान्तिकारणमतिश्रमितानाम् ।।154।।

रामदुःखभरपूरितमेतत् होदरं व्रजति मेऽद्य विदारम् ।
दुःखिदुःखहरणप्रियबन्धो! त्वां न याति करुणा गुणसिन्धो!?।।155।।

जाने महापापचयाश्रयाया अस्याः कृतं हा! हृदयं विधात्रा ।
लोहेन देहेन सहोजिताया रामेण नाद्याप्यनयोर्विभेदः।।156।।

नो ते वियोगः स्मरणस्य शक्यः सतापि किञ्चिद् रधुनाथ! सोढुम् ।
कथं जनन्या कमनीयकान्तेस्त्वदीयदेहस्य चिरं स सह्यः?।।157।।

गोचरो भवसि राम! निजानां नेत्रयोरिति चयो निगमानाम् ।
हा! वदत्यनिशमीश्वरवन्द्य! तात! जातमखिलं तदलीकम् ।।158।।

सुज्ञतां त्वयि वदन्ति विज्ञता विश्रुताः श्रुतकृताऽमितश्रमाः ।
सोऽपि राम! मयि मातरि श्रितो दुःखभाजि कथमज्ञताभरम्?।।159।।

प्राणे गते श्रीरधुनाथरूपे दुःखान्धकूपे पतिताऽधुना या ।
ये केऽपि लोके निलया दयायाः कुर्वन्तु हा! होद्धरणं हतायाः।।160।।

राम! ते दर्शनं साक्षान्नो चेद् भवति मास्तु तत् ।
स्वप्नेऽपि जायते नैव दैवस्य गहना गतिः।।161।।

मुग्धे! प्रदग्धोज्ज्वलनेन हेदः सञ्जायते भस्ममयः क्षणेन ।
महाबलो हा! विरहानलोऽयं करोति कायं विकलं सदैव ।।162।।

क्व यामि राम! क्व च हा! न यामि त्वया विना दुःखघना दिनानि ।
नैवास्ति कुत्रापि जगत्त्रयेऽपि दुःखस्य हन्ता भवतोऽवतोऽन्यः।।163।।

जानीहि सत्यं त्वमिदं सुमित्रे! रामेण पुत्रेण वियोगितायाः।
नैवास्ति किञ्चिज्जगतीतलेऽपि सञ्जीवने कारणमाकुलायाः।।164।।

विधिः कदा मे भविताऽनुकूलो निधिः सुखानामपि तापहारी।
दृशोर्ममापारतृषोः सुशोभो दृश्यो भविष्यत्यपि रामचन्द्रः।।165।।

देवैः प्रशस्याभवमेव[1] पूर्वं सर्वाधिनाथेन सुतेन हाऽहम्।
त्यक्ता त्वया सा विधिना विहीना जाताधुना राघव दीनहीना।।166।।

कदाचिदेवं सुदिनं मदीयं भवेद् भवे दुःखभवे किमत्र?।
यत्रातपत्रायतकान्तनेत्रः स्वालिङ्गनं दास्यति रामपुत्रः।।167।।

प्रयाति दृष्टिं विपुलस्य पुष्टिः शरीरजाता रघुनन्दनस्य।
तथैव शोभा वदनस्य याऽऽभा नाभाति किञ्चित् सततं ततोऽन्यत्।।168।।

स्मरणे सति रामस्य मरणेऽपि रणे कुतः?।
भयं तेन कृतान्तेन कृतान्तेन विवर्जिता[2]।।169।।

आलोक्य यं शीतलतामुपैति सन्तापितं दुःखचयेन चेतः।
कथं भवेद् विस्मरणाय योग्यो भाग्योच्चयः कोऽपि च रामचन्द्रः।।170।।

असि त्वमस्याः सुखहेतुरेको वृथैव सेको भवतः सुधायाः।
हा! जायते राघव! लोकनाथो नायास्यनाथां कथमीक्षितुं सः?।।171।।

धनं त्वमस्या मणिभूषणञ्च सञ्जीवनं यत्किमपि प्रसिद्धम्।
त्यक्ता त्वया हा! विधिनाऽधुनेयं रामाभिधेयं यदहो विधेयम्।।172।।

नीता वियोगं चिरसञ्चितेन केनापि पापेन जना इयं गौः।
स्वस्थेन वत्सेन मनोरमेण रामेण नेया दयया प्रयोगम्।।173।।

---

1. ०मम्ब!, I.O.
2. ममाधुना, I.O.

एषा पुराऽऽपादितभूरिदोषा प्राणावशेषा विवशा गताशा ।
माता शिशोः[1] प्रस्त्रवपूरपूर्णा जाता विशीर्णाकृतिरप्यपर्णा[2] ।।174।।

भूमिविधो राम! विपन्नबन्धो! सिन्धो! विधीनामुपगच्छ वत्स! ।
गवां रवान् दुःखभवाननेकान् करोत्यलं[3] राघव-वत्सकामा ।।175।।

सर्वज्ञता त्वय्ययि! राघवास्ति वदन्ति विख्यातमुनीशमुख्याः।
जानासि नेमां स्मरणेऽपि भीमां निर्यातसीमां विपदं जनन्याः।।176।।

एकवारमपि तारकमेतदापदायतपयोनिधिमध्यात् ।
रामनाम हृदये वृतमङ्गभङ्गमेव कुरुते तदमुष्याः ।।177।।

शीतलं किल जलं विपरीताद् हा! विधेर्भवति बह्निसमानम् ।
तत् तथैव जगतां सुखरूपं रामचिन्तनमिहानलरूपम् ।।178।।

कुतोऽप्युपानीय पुरः समित्रं रामं सुपुत्रं क्षितिजा-कलत्रम् ।
सन्तो महान्तः करुणा प्रकीर्णा शीर्णाकृतिं मामपि चेतयन्तु ।।179।।

नयन्तु रामाननमेतदस्याः संलोक्यभावं त्रिदशाः कृशायाः।
नो शक्तिरत्राप्यरमेव गात्रात् प्राणान् परत्रापि च मे हरन्तु ।।180।।

यद्यन्तरायः स पुरार्जितो यः कूर्मोच्चयः पापमयः किलास्ते ।
तत्खण्डने चेद् भवतां न शक्तिर्भक्तिः कथं सर्वजनैर्विधेया? ।।181।।

हाहोदयं वीतभयं प्रयातो दुष्टो विधिः पुण्यनिधिर्निधिः सः ।
यतो गतोऽशेषविशेषदाता रामोऽद्य मातापि च दुर्विधायाः।।182।।

त्वमेव रामासि गतिर्मदीया किञ्चिाद्द्वितीया विदृशोऽपि यष्टिः।
विना त्वया नो मम किञ्चिदत्र पुत्रातिचित्राचरणैर्हि शीघ्रम् ।।183।।

किं हा! विधेयं वद तत् सुमित्रे! श्रीरामपुत्रेक्षणलालसायाः?।
क्षणो युगान्तेन समानभावं प्रयाति चैवं न कदापि वृत्तम् ।।184।।

1. परं, Ujj.
2. ०रेहि शीघ्रम्, I.O.
3. ०ति माता विकला वियोगात्, I.O.

एवं विलापान् बहुधा विधाय निधाय मौलिं निजजानुदेशे ।
तूष्णीं बभूवाक्षिजलाविलाङ्गा दुःखातिसङ्गाद् रघुनाथमाता ।।185।।

वस्त्राञ्चलान्तैः परिमार्ज्य नेत्रे श्रीरामपुत्रेरितचित्तवृत्तिः।
धैर्यावलम्बा रघुनायकाम्बा वार्त्ता सुमित्रामवदत् पवित्राम् ।।186।।

महान् यदि स्यान्मयि पापराशिस्त्वं पापनाशीति जने प्रसिद्धः ।
तन्नेत्रमार्गे व्रज चारुनेत्रं श्रीरामपुत्राशुतया दयाब्धे! ।।187।।

शीताद्रिराजतनयाऽधिपतेर्गिरीश!
शम्भो-महेश-विषभूषणचन्द्रमौले!।
[1]सौमित्रि-भूमितनयासहितः सरामः
कल्याणमेतु सततं विचरन् वनेषु ।।188।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैताश्रमविरचिते 'रघुनाथबाललीलावर्णनं' नाम चतुर्थः सर्गः।।*



1. कर्पूरगौरधृतशूलसदानुकूल-
दासे सदा कुरु सदा शिवशोभनानि।। G.N.J., Pu.

# पञ्चमः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात्।।1।।

एवं सुमित्रे! रघुनाथपुत्रे सरोजनेत्रे हृदयं[1] निधाय।
[2]सन्नीयमाने समये सुखेन यातो[3] मुनिः कौशिकनामधेयः।।2।।

तोषोल्लसद्रोमविकीर्णगात्रः पूर्वैर्विचित्राभरणैस्समेतः।
गत्वा पुरो भक्तिपरो धरेशस्तं चानयद् गौरवतो गृहान्तम् ।।3।।

सुखोपविष्टं कनकासनान्ते गाधेरगाधप्रतिमं[4] तनूजम् ।
सम्पूज्य राजोचितवैभवेन संयुज्य पाणी प्रमना अवोचत् ।।4।।

जातं पवित्रं तपनस्य गोत्रं पात्रं तथा कीर्त्तिपरम्पराणाम् ।
नो लभ्यते यस्य पदप्रणीतो रेणुः स साक्षात्सदनं प्रयातः।।5।।

धन्यं वपुर्मे सदनं च पुत्रास्तथा कलत्राणि च मित्रवर्गः।
यन्मौलिनालिङ्गितमीश्वरेण तेनाङ्घ्रिनीरेण गुरोऽभिषिक्ताः।।6।।

नापेक्षितं पूर्णमनोरथानामत्रास्ति किञ्चित्तपसां निधीनाम् ।
तथापि[5] दासे करुणापरेण वक्तव्यमेव[6] प्रियताभरेण ।।7।।

---

1. हृदये विधाय, Ujj, I.O.
2. प्रणी०, Ujj.
3. समागतो गाधिसुतः प्रतीतः, Ujj.
4. ०श्रियमात्मजातम्, G.N.J; Pu.
5. ०प्ययं दास्यपरो विधेयो, Ujj., I.O.
6. भूपावली मौलिमणिर्धरण्याम् Ujj., I.O.

तुष्टो वशिष्ठप्रणतिप्रतानैः पूजावितानैर्नृपतिप्रणीतैः[1]।
पुरो नतं वीक्ष्य च रामचन्द्रं तेजःसमुद्रं मुनिराबभाषे ।।8।।

नूनं जनुर्भानुकुलप्रसूतः धन्यं त्वदीयं जगतीपतीनाम्[2] ।
यस्याप्यमित्रक्षयकृत्सुपुत्रः कान्त्या विचित्रो रघुनाथ एषः।।9।।

देहस्तवेह क्षितिपाग्रगण्य! पुण्यप्रपञ्चस्य परं[3] निधानम् ।
स्पृष्टो रजोभिः रघुनन्दनस्य[4] पादाश्रयैस्तत्परिरम्भणेषु ।।10।।

आशामपीशाश्च दिशामशेषाः शेषाङ्गभूषादय-आश्रयाय ।
कुर्वन्ति तीव्राण्यनिशं तपांसि नैते [5]लभन्तेऽस्य पदो रजांसि ।।11।।

अद्याशुभं तत्सकलं प्रणष्टं दृष्टं पदं [6]श्रीरघुनन्दनस्य ।
वंशे भवाः केचन ये च पूर्वे ते चापि सर्वे भवतो विमुक्ताः।।12।।

दिष्ट्या मया तत्सुभगेन दृष्टं प्रायः प्रकृष्टं नृपतेऽद्य दिष्टम् ।
स्मृतं[7] यदीयं चरणाम्बुजातं स्वान्तं नितान्तं सुखमेति पुंसाम् ।।13।।

धन्या ध्रुवं सा रसना रसायां [8]नान्यान् रसान् यान्भजते जनेशः।
जानाति कर्त्तुं रघुनाथनाम[9] सुधाम्बुधावन्तरमज्जनानि ।।14।।

[10]साधारणेनापि नरेण दैवात् श्रुताः कदाचिद् रघुनायकस्य ।
गुणास्तृणाभः शमनेऽस्य दण्डः प्रायः प्रचण्डोऽप्यनुतं किमन्यत्?।।15।।

---

1. ०नैश्च नृप०, Ujj., I.O.
2. ०धराणाम्, G.N.J.
3. निकेतनं यत्, G.N.J., I.O.
4. ०नायकस्य, G.N.J., I.O.
5. रजांसि ध्रुवमालभन्ते G.N.J., I.O.
6. यद्, G.N.J., Pu.
7. येन स्मृतं यत्कुरुते कृतान्तं भीतिं नितान्तं तदवेक्षणेऽपि, Ujj., I.O.
8. नान्ये रसा यान्नृपते भजन्ते, G.N.J.
9. ०नायकस्य, G.N.J.
10. अधिकः पाठः, G.N.J., Pu.

एकमाभरणं वाण्याः पापश्रेण्याश्च नाशनम्।
स्फुटमालपनं राम! रामरामेति केवलम्।।16।।

बोधनं च धनं पुंसां साधनं सुखसम्पदाम्।
नापरं विद्यते राम! नामतः प्रेमतः स्मृतात्।।17।।

रामनाम हृदा येन न स्मृतं तेन विस्मृतम्।
स्वहितं विहितं चापि पदमत्यपथे स्फुटम्।।18।।

कथं न जननी तस्य जाताऽजातार्भकाहरे।
स्मरणं रामचन्द्रस्य तस्य नो हृदयान्तरे।।19।।

जीवितेन फलं तस्य पापरूपस्य देहिनः।
भरणं च वरं राम-स्मरणं यस्य ते हि नः[1]।।20।।

जनन्या जनकस्यापि नीचहा नीचता कृता।
रामरामेति सानन्दं नोच्चैरुच्चारितं वचः।।21।।

स्मर रामं मनो नित्यमनित्यमखिलं जगत्।
भ्रमतोऽभिमतो नैव विश्रामः श्रमिणोऽन्यथा ।।22।।

पापपात्रं हि तन्नेत्रं गात्रं तेनापि दूषितम्।
ये नालोकितलोकेश - रामचन्द्रपदाम्बुजम्।।23।।

नास्माकं भविता भीतिः कालव्यालकृता क्वचित्।
रामनामौषधं सिद्धं दृष्टं बद्धं गले सदा।।24।।

कृपाण्या केवलं वाण्यास्तस्याश्छेदः स्वयं हितः।
नोद्गिरत्यनिशं याहि पाहि रामेति दीनवत् ।।25।।

कालकोपानलज्वाला-जालानामतिशोषणम्।
रामनामस्मृतेर्नान्यद् दृश्यते जलसेचनम्।।26।।

---

1. तेन हि, I.O.

श्रुते स्मृते प्रेयसि कीर्त्तितेऽपि रसालये नामनि राधवस्य।
सञ्जायते चेतसि यः प्रतोषो नैवास्य लेशोऽप्यमृतस्य पाने।।27।।

वर्णोऽपि कर्णं यदि रामनाम्नः प्राप्तः कदाचित् सुकृतेन जन्तोः।
यात्येव नाशं तदमुष्य पापं नासौ प्रतापं भजते भवोत्थम् ।।28।।

सत्यं वदामि चेतस्त्वां रामनामस्मृतेः परम्।
दृश्यते नैव रुचिरं किं चिरं भ्रमसे वृथा?।।29।।

यतो याति मृतिर्नाशं स्मृती रामपदस्य सा।
क्रियते न कुतो मूढ! या च रूढपदप्रदा?।।30।।

अबालं हृदये जालं दुःखानामुदितं यदि।
रामेत्युच्चारितं प्रोच्चैस्तत् क्षणादेव नश्यति।।31।।

संत्यज्य शृणु सन्देहं सस्नेहं त्वां ब्रवीम्यहम्।
सम्मतो रामतो नान्यस्त्रैलोक्ये बहुना किमु?।।32।।

वैकुण्ठमेतत् क्षितिपालधाम! रामाभिधानो वसतीह विष्णुः।
आदाय वेशं मनुजस्य जोषं क्लेशं जनानां[1] हरति स्मृतोऽपि ।।33।।

दास्यं प्रशस्याङ्घ्रियुगस्य यस्य करोत्यखण्डं कमलालयापि।
किञ्चित्कृपोदञ्चितलोचनान्त-सम्भाविता यान्ति ययाऽमरत्वम्।।34।।

सम्पालकश्चापि विचालकश्च ससर्जकोऽसौ जगतोऽखिलस्य।
सिद्धान्तवाक्यं[2] न हि किञ्चिदेव रामं विना यत्प्रतिभाति सर्वम् ।।35।।

[3]जानन्त्यलं रूपममुष्य केचित् ये चित्स्वरूपस्य परात्परस्य।
नो मायया सङ्गमिता विमोहं कोऽहं त्विति प्राञ्चति न भ्रमोऽयात् ।।36।।

गणान् गुणानां रघुनायकस्य शेषोऽप्यशेषान्नहि वक्तुमीशः।
सहस्रसंख्या गणितानि यस्य प्रोल्लासमायान्त्यनिशं मुखानि ।।37।।

---

1. विनाशं नयति स्मृतो यः, Ujj., I.O.
2. बह्व्या किमुक्त्या, G.N.J., Pu.
3. अधिकः पाठः, G.N.J., Pu.

निहत्य शीघ्रं निचयं खलानां हृत्वाऽचलाया अपि भारमुग्रम् ।
सन्तोषयन् स्वीयजनं च राजन्! रामो निकामं विजयं प्रयातु[1] ।।38।।

श्रुत्वा वचः कौशिकसम्प्रयुक्तं सन्तुष्टचेता अवदन्नृपस्तम्।
अहं हि जाने भवदीयदृष्टिः सृष्टेर्निदानं महतां विधीनाम्।।39।।

आपत्समाना परमापि सम्पद् यया धिया निर्मलया समेतः।
भवत्समानं यदि भूरिमानं नानन्दपूर्णं कुरुते हि पात्रम्।।40।।

भूमीपतेरेवमुपेत्य वाचं वाचंयमानामपि वन्दनीयः।
आनन्दसम्फुल्लमुखाम्बुजोऽसौ निवेदयामास मनोगतं स्वम् ।।41।।

सुबाहु-मारीचनिशाचरौ द्वौ मुख्यौ सहाया बहवस्तदीयाः।
कुर्वन्ति विघ्नान् यजनस्य काले स्थित्वान्तराले गगनस्य दुष्टाः।।42।।

रामाभिधानस्तव यो हि बालः कालः[2] स साक्षाद् रजनीचराणाम् ।
तं देहि राजन्[3]! निधनाय तेषां शेषांशभूतेन[4] च लक्ष्मणेन ।।43।।

नातः परः कोऽपि विभाति धर्मः शर्मप्रदानादिह गोद्विजानाम् ।
दृष्टं श्रुतं[5] तद् भवता समस्तं [6]श्रुत्यादिशस्तं भूभुजस्य कर्म ।।44।।

राजा हतस्तद्वचनोग्रधार-दम्भोलिना हा! हृदयप्रदेशे।
[7]आसीदपेताखिलदेहचेष्टः श्रेष्ठो विचारेष्वपि चित्रमेतत्।।45।।

यस्यावनं जीवनमेव रामः कामः स्वकान्त्या विजितोऽपि येन।
जातस्मृतिर्भूपतिरात्तधैर्यस्त्रैलोक्यवर्यं मुनिमाह मन्दम्।।46।।

---

1. ०दा०, G.N.J.,
2. साक्षात्स कालः क्षणदाचराणाम् , Ujj, I.O.
3. वीरं, G.N.J., Pu.
4. ०मेतं नृपतेऽनुजञ्च, G.N.J., Pu.
5. तदेतत्, Ujj., I.O.
6. वेदा०, G.N.J., Pu.
7. मुहूर्त्तमात्रं विगताङ्गचेष्टः कष्टं परं प्राप तदोपदिष्टः।। Ujj., I.O.

दक्षो न रक्षो निधने कृपालो! बालो ममाब्जच्छदकोमलाङ्गः।
दातुं[1] न शक्तो रघुनाथमेनं मां वा ससेनं नय तात! तत्र ।।47।।

किञ्चिद् दृशोर्दूरमसौ प्रयाति जीवो ममातिभ्रमतामुपैति।
शक्तिर्ममाङ्गप्रतिवर्त्तिनी सा रामो न मिथ्यागुरुमालपामि ।।48।।

प्राणाः मदीया वपुषः प्रयान्तु सुखेन[2] काचिन्न ततोऽस्ति हानिः।
परन्तु रामः क्षणमात्रमत्र[3] गात्रप्रसङ्गाद् विमुखो न मेऽस्तु ।।49।।

विना दृशं नाथ! भृशं मदीया तनुर्भवेत्सञ्चलनेषु[4] शक्ता।
वियोगतो नास्य[5] पदप्रमाणमस्या मुने! सञ्चलनप्रसङ्गः।।50।।

मीना विनाम्भोनिचयं कदाचित् सञ्जीवनं यान्तु निमेषमात्रम्।
परन्तु नाहं रघुनायकेन जीवामि किञ्चिज्जनजीवनेन।।51।।

मीना विना वारि मनाक् क्षणार्द्धं सञ्जीवनं यान्तु मुनेऽप्यनेके।
नाहं विना हंसकुलध्वजेन जीवामि रामेण मनोरमेण।।52।।

यथा वनं जीवनमम्बुजानां सर्वेषु लोकेषु मुने! प्रसिद्धम्।
तथा मदीयं रधुनाथ! एष क्लेशः क्षयं याति भवोद्भवोऽस्मात् ।।53।।

रामो यथा प्रेमपदं ममास्ति तथा मुने! नैव सुधाम्बुधानाम्।
मुञ्चामि नामुं हृदयादतृप्तस्तृप्ताः कदाचिद् विसृजन्ति तान्ते ।।54।।

भवत्सदृक्षाश्च वदन्ति दक्षा पुराणपक्षान्तरभावनासु।
रामो विधेयो न कदापि दूरे किञ्चिन्नरेणेह[6] मुनीशवर्य![7] ।।55।।

---

1. ददामि नाहं, Ujj., I.O.
2. काचित्सुखेनैव, Ujj., I.O.
3. ०मेष, Ujj., I.O.
4. ०ति०, G.N.J., Pu.
5. रामपदः पदञ्च नास्या भवेत्, Ujj., I.O. Pu.
6. ०ति, G.N.J.,
7. ०श्वरेह, G.N.J., Pu.

पशौ हि राशौ [1]खरपातकानामेवं कदाचित्समुदेतु बुद्धिः।
प्रयातु रामः क्षणमेव दूरे नेयं नरे देहि वरे मुने! स्यात् ।।56।।

इष्टा हि[2] दृष्टा बहवः पदार्थाः सृष्टाविह स्त्रष्टुरपाररूपाः।
नैते कलां पूर्णकलस्य तस्य श्रीरामचन्द्रस्य मुने! प्रयान्ति ।।57।।

बालेन बालः ध्रियते करेण शरासनं हा! गुरुणा शरेण।
बध्याः कथं स्युः रजनीविहारा रामेण ते प्राणहरप्रहाराः?।।58।।

एतद् बला ये सकलाश्च बालाः कुर्वन्ति लीलाः परितः पुरान्ते ।
आयान्ति भीताः पुरनरेव गेहं दृष्ट्वा समूहं च पुरः पशूनाम् ।।59।।

नाद्याप्यसौ याति कदापि दूरे खेलन् पुरे केवलमेव रामः।
एते समस्ताश्च जनाः पुरस्तात् पृष्टा वदिष्यन्यखिला वरिष्ठाः।।60।।

मृतः कृतश्चेत् पुरतः कदाचित् निशाचरः प्राणहरः शिशूनाम् ।
जीवन्नसौ किं न करोति दृष्टः प्रायो वरिष्ठस्त्वमिहास्पृहाणाम्?।।61।।

पलायनं यस्य च [3]गोत्रमात्रात् कुतो भवेत् तं प्रति तस्य यात्रा।
क्रूरेण दूरे समरस्य वार्त्ता रामः कथं तन्मरणस्य कर्त्ता?।।62।।

तुल्या मया ये पुरुषा महान्तश्चिरं चरन्तश्च दिगन्तरेषु ।
आकर्ण्य नामापि तमीचराणां भीत्यातुराः कम्पभरान् श्रयन्ते ।।63।।

भ्रान्त्या विहीना अपि ये भवन्तो जाताः कथं ते भ्रमभावभाजः?।
न केन दृष्टं मशकेन कुत्राप्युच्चालनं काञ्चन-पर्वतस्य ।।64।।

स्पर्शं कुरु त्वं स्वकरेण तन्वा रामस्य नन्वाशु सुकोमलायाः।
नेयं ध्रुवं तात! पराभिघात-सञ्जातपीडासहनेऽसमर्था ।।65।।

समानशीलैर्विदधाति बालैः क्रीडावशाद् युद्धमसौ प्रबालैः।
तदप्यहो! नो सहते मनो मे कुतः पितस्तैश्च पलाशजातैः?।।66।।

---

1. बहु० Ujj., I.O.
2. प्र०, Ujj., I.O.
3. गोत्रोऽभिधानमित्यादर्शमातृका स्पष्टयति।

वैवाहिकं कौतुकमीक्षितुं यः सम्प्रार्थितः स्वीयजनेन रामः।
दत्तं क्षणं नैव मया दयाब्धे! देयः कथं योद्धुमसौ पलाशैः?।।67।।

जाता अनन्ता पतयोऽप्यनन्ताः ख्याता अनन्तावलये जनाश्च ।
एते पुरा नैव कदापि कुत्राप्यादानदानेन मुने! प्रवृत्ते ।।68।।

किं कौतुकं पङ्कजलोचनस्य रामस्य भीरोः कथनीयमेतत् ।
भीतिं विरूपेक्षणतोऽपि याति स्वप्नेऽपि हा! रोदिति जातकम्पः।।69।।

जाग्रत् कथं तान् पुरतः कृतान्तान् भीमाकृतीन् भीमतरान् रवांश्च?।
आदाय शैलानपि हन्तुमुच्चैर्वेगात् प्रयातान् प्रति यातु रामः।।70।।

गृही गृहीताखिलगेहिकर्मा जानाति धर्मान् किल गेहगानाम् ।
एकाकिनस्ते वनवासिनश्च जानन्ति किं तान् सुखदुःखहीनाः?।।71।।

यो जीवतां जीवनमेव रामः कामा यतो यान्ति च पूर्णभावम् ।
अन्ते लभन्तेऽपि च मुक्तिमेते तं ते ददामीश! कथं तनूजम्? ।।72।।

श्रुत्वा वचः क्ष्मातलपालकस्य मुनीशकोपोदयकारणं तत् ।
इष्टो वशिष्ठः स्वकुलस्य शापाद् भीतो रहः[1] किञ्चिदवोचदेवम्[2] ।।73।।

वाचो विलङ्घ्यया न हि कौशिकस्य रामोऽनुजेनापि सह प्रदेयः।
एवं कृते सिद्धिसहस्रमग्रेऽव्यग्रेण दृष्टं मनसा समग्रम् ।।74।।

वशिष्ठवाक्यात्कृतधैर्यबुद्धिः सिद्धेर्भवित्र्या अधिपो धरित्र्याः।
आनीय पुत्रौ मनसा[3] पवित्रौ करे[4]ऽर्पयत्सत्कृतिकौशिकस्य ।।75।।

अवोचदेनं प्रणतः पदाब्जे राजा गलन्नेत्रजलप्रवाहः।
तातोऽनयोस्त्वं जननी च सर्वं नैवास्त्यपूर्वं वचनं ममेदम्[5] ।।76।।

---

1. ०हश्चेदम०, Ujj., I.O.
2. ०नम्, Pu.
3. स्वहृदा, G.N.J., Pu.
4. ०ऽददा०, Ujj., I.O.
5. मदुक्तम्, G.N.J., Pu.

गाढं गले बाहुयुगेन रामं धृत्वा सकामं सह लक्ष्मणेन ।
प्रेमोद्गमाद् गद्गद्वाग्नृपस्तावाहाप्रमादो मुनिसेवनेऽस्तु ।।77।।

रामः प्रणामं प्रविधाय किञ्चिद् हसन्[1] लसद्वक्त्रसरोजकोशः।
संवीक्ष्य तातं परितो भ्रमन्तं चिन्ताशतानामुदयैरवोचत् ।।78।।

ज्ञात्वापि[2] सर्वं श्रुतिसम्मतार्थं व्यर्थं पितर्हा![3] लभसेऽनुतापम् ।
अत्रापि धात्रा विहिता हितानां लब्धिर्भवेन्नो[4] किमु देवतानाम्? ।।79।।

नाशस्य पात्रं सततं हि गात्रं श्रोत्रं गतस्ते नृपतेऽयमर्थः।
अञ्चन्ति तेनापि च कीर्त्तिजालं भूम्यन्तरालं समलङ्कृतं तैः ।।80।।

गात्रे स्थिते त्वत्सुकृते तनुत्रे प्रायः पवित्रे मुनिपद्रजोभिः।
कालानलादप्यतुलान्न भीतिः कुतोऽसतो राक्षसतोऽपि पापात्?।।81।।

आज्ञा प्रदेया [5]भवता सुखेन गन्तुं सहानेन मुनीश्वरेण ।
ततः सुतत्वं सफलं पितः[6]स्यात् कामार्पणादस्य तवापि कीर्त्तिः।।82।।

एतद्[7] वचः श्रीरघुनन्दनस्य वक्तुं न शक्यं पुरुषान्तरेण ।
श्रुत्वाऽभवन्विस्मितमानसास्ते वशिष्ठमुख्या मुनयो नयज्ञाः[8] ।।83।।

देवास्तदैवास्य निशम्य वाच्यं जातप्रमोदाः परितः प्रचक्रुः।
वृष्टिं वरिष्ठस्तुतिवृन्दपूर्वं सर्वेशमौलो सुरसालपुष्पैः।।84।।

अभूत्तदा मे सहसा शरीरं नीरस्य पूरेण परेण पूर्णम् ।
रोमोद्गमेनापि परप्रमोद-जातेन चित्राकुलमानसायाः ।।85।।

---

1. ०त्प्रसन्नाननसारसः स, Ujj., I.O.
2. जानन्नपि त्वं, Ujj., I.O.
3. कुतस्त्वं, G.N.J., Pu.
4. ०वत्येव,, Ujj., I.O.
5. करुणाकरेण, G.N.J., Pu.
6. मम, Ujj., I.O.
7. एवं, Ujj, I.O.
8. ०ऽपि सभ्याः, Ujj, I.O.

वाक्यादतो भानुमतेंशुजालात् त्रासो नृपालादगमत् कुतोऽपि?।
अन्ते प्रलीनः कुहरे गिरेर्वा[1] सद्यः सुमित्रे! तमसामिवौघः।।186।।

भूयोऽर्चितो भूपतिना विशेषात्सन्तोषसंघाकलितान्तरालः[2]।
[3]अदान्मुदाऽऽशीर्निचयं नृपाय तस्मै सुपुत्राय मुनीन्द्रवर्यः ।।187।।

मातर्मया राक्षसमारणाय सलक्ष्मणेनापि च गम्यतेऽद्य।
सन्तु प्रणामा विहसन्ममेति वदन् धृतोऽलं हृदयेन रामः।।188।।

प्रेमप्रवृत्ताक्षिपयःप्रवाहैः कृताभिषेको रघुनाथबालः।
आश्वासयन्मामवदत्स धीरो वीरोऽपि चिन्ता बत मा विधेया ।।189।।

रामस्मृतौ हा! रजनीचराणां प्रयाति चेतो भयतोऽतिकम्पम्।
त्वं यासि चेद् याहि शिवः शिवं ते करोतु दत्तेति मयाप्यनुज्ञा ।।190।।

तदा सुमित्रे! जगदेकमित्रे रामे सुपुत्रे गमनोद्यतेऽस्मिन्।
धृतेऽपि धैर्ये परितः प्रजा ते मल्लोचने प्रेमजलाकुलान्ते।।191।।

गत्वाग्रतस्तेन कृताभ्यनुज्ञो राजा सदा ज्ञानविचक्षणेन।
पुनः पुनर्वन्दितपादपद्मः सद्मप्रदेशाद् विदधे प्रयाणम्।।192।।

कृत्वा पितुः पादयुगे प्रणामान् प्रयाणकाले प्रियताकुलेन।
स्वान्तेन कान्तं वचनं स रामो दया विधेया बहुधेत्यवोचत्।।193।।

विरेजतुस्तौ पुरतः प्रयाणे गाधेस्तनूजस्य[4] कुमारवेशौ।
[5]रत्नस्फुरत्सुन्दरचापतूण-निस्त्रिंशवर्माश्रयिणौ स्मितास्यौ।।194।।

अवादि लोकैर्नगरान्तरस्थैस्सविस्मयोत्फुल्लविलोचनाब्जैः।
[6]लोलौ तु गौलौ ज्वलनस्य बालौ तेजो-विशालौ चलितौ पुरोऽस्य ।।195।।

---

1. ०र्यः, Ujj, I.O.
2. ०राशिप्रलसन्मना सः, Ujj, I.O.
3. ०त्तदा०, Ujj, I.O.
4. प्राणेन पूर्णावपि राघवौतौ, Ujj, I.O.
5. ०त्नोज्ज्वल०, G.N.J., Pu.
6. श्लोकार्द्धः आदर्शमातृकायां नास्ति।

बिम्बाविवाम्बाऽखिलतोषहेतू दिवाकरस्य प्रचुरप्रकाशौ ।
भूमीतलं कौतुकतः प्रयातावेवं मदीयेन हृदा प्रणीतम् ।।96।।

सिद्धिं प्रयातं[1] सकलं हृदिस्थं स्वच्छं दधे सा चितिमानसं स्वम् ।
रामे [2]स्वदासार्पितसर्वकामे नामेऽहितं भाति किमप्यपूर्वम् ।।97।।

किं कालक्षुधितो व्याल इव मामत्तुमिच्छसि?।
जगत्त्राता मया भ्राता लक्ष्मणस्य समाश्रितः।।98।।

न कालास्तु भिया कम्पः सानुकम्पस्त्वयं त्वयि।
अनिष्टेष्वपि नानिष्टं शिष्टा एव वितन्वते।।99।।

[3]विश्वामित्रसमाह्वयेन मुनिना साक्षादिहाम्भोधिना
विद्यानाममलाबलाप्यतिबला विद्येऽनवद्येऽर्पिते।
बाधा कापि च जायते पथि गतो नैषा तृषा क्षुद्भवा
रामायापि च लक्ष्मणाय निधये नानागुणानां प्रिये ।।100।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैताश्रमविरचिते पञ्चमः सर्गः।।*



1. प्रयास्यत्यखिलं किलेष्टं मुनेः सुतुष्टं हृदयं बभूव, Ujj., I.O.
2. ०ऽत्र, G.N.J., Pu.
3. विश्वामित्रमुनीन्दुनातिशुचिना विद्याब्धिविद्योतिना
पूर्णेनापि रसैर्बलाप्यतिबला विद्या प्रसिद्धा श्रुतौ।
नाशं याति यतो वने विचरतां बाधा क्षुधा तृड्भवा
रामायापि च लक्ष्मणाय विधिना स्नाताय विश्राणिता।
– इतिपाठान्तरम्, Ujj. I.O.

# षष्ठ सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात्।।1।।

मुनिमनुव्रजतोर्नतयोस्तयोः सहजकान्तिसमाकुलदेहयोः।
[1]अनुससार रुचिः परितो वनं घनतराऽनतरात्रिचरद्रुहोः।।2।।

कुशिकवंशमणिर्मुनिरब्रवीद् रघुपतिं भयलोलविलोचनः।
वसति रात्रिचरी त्विह ताटका सकलहा [2]कलहावसरोऽधुना ।।3।।

पीडयन्त्यातितरामतिधोरा दुःखराक्षसवराः प्रखरा माम्।
राम! नाशय विशेषत एतान् सार्थकस्तव भवेदवतारः।।4।।

ताडकामपि च पिण्डनाडिकां मार्गपीडनविधानपण्डिताम्।
सूक्ष्मरूपमुपकल्प्य संस्थितां हा! हृदि क्षिपहि रामनामतः ।।5।।

इति निशम्य वचो [3]मुनिनोदितं समुदुदञ्चितरोममनोहरः[4]।
रघुपतिस्त्वरया सशरं धनुः समकरोन्मकरोच्चलकुण्डलः।।6।।

[5]श्रुतपदक्रमणापि शिताशना मनुजभक्षणसक्षणमानसा।
[6]अव( रजं ) जनपुञ्जसुमेचका नरचरं[7]( न )खरम्भितदिक्तटा ।।7।।

1. परि०, G.N.J., Pu.
2. कलहः = संग्रामः, इत्यादर्शमातृका स्पष्टयति।
3. गुरुणो०, G.N.J., Pu.
4. ०देहतनूरुहः, G.N.J., Pu.
5. अधिकः पाठः, G.N.J., Pu.
6. अजवजदं? G.N.J.
   अवजजदं? Pu.
7. ०वरं, G.N.J.

दशनभीषणवक्त्रमहागुहा [1]नयनकूपविरूपविलोचना[2]।
नरवरान् [3]परिवीक्ष्य पलाशना समहसन्महसन् हृदयान्तरा ।।8।।

ग्रसनविस्तृतभीममुखान्तरे खरतरेण शरेण पराहता[4]।
[5]दशरथस्य सुतेन निशाचरी क्लमरणं[6] मरणं क्षणतो ययौ ।।9।।

[7]कृतिमुदीक्ष्य मुनिर्महतीन्तदा बहुमुदा कलितान्तर-ईश्वरम् ।
भुजयुगेन दृढं हृदये दधौ दिविभवैर्विभवैर्विधिनार्चितम् ।।10।।

कृतिमिमामनघामघनाशनो मुनिजनक्षयकारणमारणम् ।
परमविस्मयहेतुमिहाकरोत् प्रथमतोऽथ मतो जगतामसौ ।।11।।

अनुमतो मुनिना पुरतः सुरैर्जयजयेति रवैश्च मनोहरैः।
[8]रघुपतिर्मुदितोऽनुजसंयुतो विसरणः शनद्धरिपुर्ययौ ।।12।।

वनमथो कुशिकान्वयजाश्रयं ज्वलनदीप्ततपोनिधिसंकुलम् ।
स मुनिबन्धुरवाप रघूत्तमो द्विजरतोऽजरतोषणतत्परः[9]।।13।।

विदधुरर्चनमानतमौलयः प्रमुदिता मुनयो नृपपुत्रयोः।
सुमनसोऽपि च कौशिक-नोदिताः सुखरताऽखरतादिगुणान्विताः।।14।।

---

1. वितत, Ujj, I.O.
2. निरीक्षणा, G.N.J.
3. ०नभि०, Ujj, Pu.
4. नरश्वरः G.N.J.
   सुताडिता, Pu.
5. प्रतिहतिं विद्धेऽप्रतिमोऽसती G.N.J.
   दशरथात्मभवेन निशाचरं, Pu.
6. क्लमेण रणः संक्षोभः यत्र क्रियायामित्यादर्शमातृका स्पष्टयति।
7. अधिकः पाठः, G.N.J., Pu.
8. रघुकुलाग्रसरः सहितानुजो, G.N.J.
   रघुपतिर्मुदितः सहितानुजो, Pu.
9. अजरः=देवः, इत्यादर्शमातृका स्पष्टयति।

[1]अन्यांश्च मन्त्रान् परमार्थचित्रान् जगत्पवित्राय रघूत्तमाय ।
सलक्ष्मणाय प्रददौ मुनीशः कोशः श्रुतीनां विजयाभिलाषः ।।15।।

आहूय सर्वान् परितो मुनीनां गणान् महानन्दपरीतचेताः ।
गाधेः सुतः [2]शोभनकीर्त्तिरुच्चैर्मन्त्रप्रपाठैर्यजनं[3] वितेने ।।16।।

कृत्वा प्रणामान् मुनयः पदाब्जे नियुज्य पाणी स्फुटसत्त्वभावाः ।
सम्पूजितं श्रीरघुनाथमुचुस्त्राताऽधुना त्वं भव विष्णुमूर्त्ते! ।।17।।

आरम्भकाले यजनस्य रामो विरामहेतुः रजनीचराणाम् ।
अतिष्ठदाकृष्टगरिष्टचापः[4] स्फूर्जत्प्रतापः प्रतिनन्दयंस्तान् ।।18।।

मारीचनामा च सुबाहुरेतौ यातौ समेतौ रजनीचरैश्च ।
मध्ये[5] त्वमेध्यं हुतभोजनानां प्रायस्त्यजन्तौ परितोऽपि वस्तु ।।19।।

चित्रं श्रुतं तच्छृणु [6]वीरपुत्रे किञ्चित्सुमित्रे यजनस्य काले ।
एकः समुद्रं विशिखेन नीतो रामेण चान्यो निहतः क्षणेन ।।20।।

वीराग्रगण्येन च लक्ष्मणेन कौमारवेशेन[7] मनोहरेण ।
हुताशनेनेव गुणास्तृणानां[8] रात्रिञ्चराणां विलयं[9] प्रणीताः ।।21।।

त्वं पश्य पश्य प्रथमं सुमित्रे! गात्रे स्मरन्त्या अपि मे भयेन ।
जातः समन्तादिह[10] रोमहर्षो वीर्यप्रकर्षो[11] ह्यनयोर्गरीयान् ।।22।।

---

1. अन्येऽपि मन्त्रा बहवोऽर्थचित्राः प्रायः पवित्राय, G.N.J., Pu.
2. संस्तुतभाग्य०, Ujj. I.O.
3. ०स्स चकार यागम्, Ujj., I.O.
4. ०दाकृष्टधनुर्महात्मा सहानुजेन, G.N.J., Pu.
5. ०ऽत्य०, G.N.J., Pu.
6. साधु०, G.N.J., Pu.
7. ०शाति०, Ujj., I.O.
8. चया०, G.N.J., Pu.
   गणा०, Ujj.
9. निहताः समूहाः, G.N.J., Pu.
10. ०दपि, Ujj., I.O.
11. र्षस्त्व०, Ujj., I.O.

मृदा कृतस्यापि पशोर्विघाते श्रमः कथञ्चिद् भवति प्रहर्त्तुः।
परन्तु नासीद् हननेऽस्त्रपानां श्रमस्तयोः[1] किं कथनीयमेतत्? ।।23।।

सम्पूजितौ कल्पतरुप्रसूनैर्वादित्रचित्रध्वनिपूरिताशैः।
देवैरलं देववरप्रकाशौ हा! शौर्यराशी तनुजौ मदीयौ ।।24।।

कान्ता मुनीनां कदलीदलेषु निधाय पुष्पार्चितदीपमालाः।
चक्रुर्हसन्त्यो मुदिताः समस्ता नीराजनं [2]मङ्गलभाषणेन ।।25।।

धन्यः पिता सा जननी च धन्या तयो र्न पुण्याचरणस्य पारः।
एतौ यतो जन्मगतौ कुमारावनन्तसाराविति चोचुरेताः।।26।।

कृत्वा प्रणामं स्थितमग्रभागे रामं विनीतं सह लक्ष्मणेन ।
गुरुः परानन्ददृगम्बुपूरो[3] मौलिं समाघ्राय हृदा दधार ।।27।।

अन्येऽतिधन्येन[4] पदाम्बुजेन रामस्य लग्नानि मुदा शिरांसि ।
संरक्षिता एव परं[5] वदन्तो दूरे न चक्रुर्मुनयस्सबालाः।।28।।

कृतारिनाशाः परिपूरिताशाः सञ्जातरोषा बहुशो मुनीशाः।
ते सम्बभूवुर्यजनक्रियासु प्राणप्रियासु द्विजपुङ्गवानाम् ।।29।।

श्रीरामचन्द्राङ्घ्रिमहाप्रसाद-निस्तीर्णचिन्तागहनाम्बुराशिः।
चकार सर्वाण्यथ कौशिकोऽपि कर्माणि शर्मागमकारणानि ।।30।।

संयोज्य[6] हस्तौ [7]स्थितमग्रभागे नागेश्वरेणापि समेतमेनम् ।
रामं [8]समासादितसर्वकामं श्यामं रुचाऽसौ मुनिराबभाषे ।।31।।

---

1. तयोः श्रमः, G.N.J., Pu.
2. राघवयोः कृतार्थाः, Ujj., I.O.
3. ०रश्शिरः, Ujj., I.O.
4. ०ऽपि पुण्येन, Ujj., I.O.
5. मुदा, Ujj., I.O.
6. ०यु०, Ujj., I.O.
7. पुरतः स्थितं तं सहानुजेनापि विनम्रमौलिम्, Ujj., I.O.
8. सदा पूरितभक्तकामं सानन्दचेता अवदन्मुनीशः, Ujj., I.O.

नामस्मृते राम! भवन्ति लोकाः संसारशोकाद् बहवो विमुक्ताः।
त्वय्यागते भर्त्तरि! विष्टपानां[1] जाता वयं वीतभया न चित्रम् ।।32।।

निधाय भूतले कायं रामायं कुरुतेऽर्थनाम्।
स्थातव्यं भवतां स्वान्ते मदन्ते समुपस्थिते।।33।।

संसारभीतिहरणं स्मरणं ते प्रकुर्वतः।
अस्तु मे मरणं राम! शरणं त्वामहं गतः।।34।।

किं वा कृतं हा[2] सुकृतं धरित्र्या लब्धास्थयास्मद्विपिनान्तराले ।
सुदुर्लभेनापि परैः सुरेशैर्योगं गता राघव! ते पदेन?।।35।।

गोत्रं पवित्रं रघुनाथजातं यातञ्च कीर्त्तिं परमां ममेदम् ।
दृष्टं मया यज्जगतां[3] वरिष्टं प्रेष्ठं [4]दृशोर्दिष्टवतां स्वरूपम् ।।36।।

साकं गणेनापि च पूर्वजानामेते निजानां मुनयस्समस्ताः[5]।
पूतातिपूता जगतां हि जाताः [6]प्रायः सनाथा भवतः पदेन ।।37।।

अस्तु प्रपूर्णं वचनं ममेदं वक्तव्यमेकेन कियन्मुखेन ।
धन्यातिधन्यस्तनुभृत्स एव स्वप्नेऽपि दृष्टं[7] रघुनाथरूपम् ।।38।।

सम्प्रेषितं पत्रमतिप्रियेण श्रीराघवैतन्मिथिलेश्वरेण।
संवीक्षितुं शैवधनुर्युवाभ्यां गन्तुं समीहा किल वर्त्तते मे ।।39।।

चापं दुरापं पुरुषान्तरेण तत्स्थापितं तत्र महेश्वरेण।
राजाऽतिसाधुर्मिथिला महान्ता [8]विलोक्य सर्वं व्रजतामयोध्यम् ।।40।।

---

1. विष्टपानां = देवानामित्यादर्शमातृका स्पष्टयति।
2. तत्, Ujj., I.O.
3. ०निना, Ujj., I.O.
4. सतां दि०, Ujj., I.O.
5. ०यो वयञ्च, G.N.J., Pu.
6. सर्वे, G.N.J., Pu.
7. रामेति वदेत्कदाचित्, Ujj., I.O.
8. सं०, G.N.J., Pu.

श्रुत्वा वचस्तद् गहनार्थभावं श्रीमद्गुरोर्हासलसन्मुखेन ।
ऊचे वचः श्रीरधुनन्दनेन नमच्छिरस्त्वोमिति सानुजेन ।।41।।

छात्रैः पवित्रैः रुचिरात्तधोत्रैर्विन्यस्तनेत्रैर्गुरुपादपद्मे[1]।
मुनिः समेतो रधुनन्दनाभ्यां [2]पुरीं प्रतस्थे मिथिलाभिधानाम् ।।42।।

गृह्णन् गुणानिन्दुगुणाश्रयस्य श्रीरामचन्द्रस्य सुधास्वरूपान्[3] ।
उल्लङ्घिताध्वाप्यभवन्न[4] पात्रं गात्रं श्रमस्यास्य[5] हि कौशिकस्य ।।43।।

नम्रैः फलानां निचयेन वृक्षैः कीर्णं[6] लताभिः कुसुमैस्तताभिः।
रामो विलोक्याश्रममश्रमस्तं पप्रच्छ कस्यायमिति प्रतीशम्? ।।44।।

पृष्टो गुरुः सर्वमुरुक्रमेण रामेण [7]तद्वीक्षणविस्मितेन।
सन्तुष्टचेताः [8]हृदयान्तरेऽसौ वृत्तं पुरातन्कथयाम्बभूव ।।45।।

अत्राभवत्पूर्वमपूर्वकर्मा धर्माश्रयो राघव! गौतमाख्यः।
स्पृष्टास्य दुष्टाचरणेन कान्ता शक्रेण शान्तापि च तेन शप्ता ।।46।।

स्पर्शो यदि स्याद् रजसः पदस्ते पुण्यैरगण्यैरपि दुर्लभस्य ।
दीनेश! तस्या भविता विमोक्षः पाषाणभावादतिदुःखहेतोः।।47।।

धृत्वा करे तं निकरं द्युतीनां श्रीरामचन्द्रं सगुरुर्गुरूणाम् ।
पत्न्या मुनेरुद्धरणे सहान्यैरानन्दतस्तत्सविधं जगाम ।।48।।

स्पृष्टा वरिष्टाङ्घ्रिनखाङ्कुरेण रामेण चित्रं शृणु पावनेन ।
जाता शिला याऽतिमलावरुद्धा शुद्धा तदैवाप पुनः स्वरूपम् ।।49।।

---

1. संन्यस्तनेत्रैः, G.N.J., Pu.
2. चक्रे प्रयाणं मिथिलां मुदेन, G.N.J., Pu.
3. ०समानान्, Ujj., I.O.
4. ०तागण्यपथस्य गात्रं पात्रं, Ujj, I.O.
5. ०भवदेव नास्य, Ujj., I.O.
6. ०र्णैः I.O.
7. ०द्दर्शन०, Ujj., I.O.
8. सकलं प्रवृत्तं, Ujj., I.O.

पादधूल्याऽप्यहिल्या सा शापशल्याद् विदूरतः।
कृता कृतार्थान् सकलान् करोतु रघुनन्दनः।।50।।

तदा तदालोक्य परं पवित्रं[1] शापात्कलत्रं द्विजनेर्विमुक्तम् ।
देवा ववर्षुर्द्युतरुप्रसूनैः स्वपाणिलूनैः रघुनाथमौलौ ।।51।।

कृतं त्वया यद् रधुनाथनाथ! नेदं कृतं पूर्वमपीह केन ।
उक्त्वैवमाकाशतले सुरेशाश्चक्रुः परेशाय शतं प्रणामान् ।।52।।

इतिसजलपयोदश्यामदेहप्रभेण
भजनरतजनानां कल्पभूमीरुहेण।
रघुकुलतिलकेन प्रापिता मुक्तिमेषा
क्षयितसकलदोषा लीलया ब्रह्मयोषा ।।53।।

एवं चित्रमभूत्कदापि जगती–लोकेऽपि नाके परं
पातालेन च सर्वतोऽम्बुजजनेः सृष्टौ पुनः किं ब्रुवे?।
एतद् यद् रविवंशसागरभवेनानेन रामेन्दुना
पाषाणोद्धरणं कृतं सुकृतिना स्वीयाङ्घ्रिधूलीलवात् ।।54।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमशिष्याद्वैतविरचिते षष्ठः सर्गः।*



1. विचित्रं, I.O.

# सप्तमः सर्गः

जयन्ति रधुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात्॥1॥

अग्रे समग्रेश्वरपूजिताङ्घ्रिर्दृष्टः प्रणष्टाशुभया तयाऽसौ।
रामः स्वकामाधिगतेर्निदानं[1] पत्या यथोक्तः किल गौतमेन ॥2॥

सवेपथुः स्विन्नतनुः प्रमोदादुद्भिन्नरोमावलिरस्रुचक्षुः।
प्रवक्तुमप्यक्षरमप्रगल्भा क्षणं तदासीन्महिला मुनेः सा ॥3॥

येनोद्धृता स्वरजसा कुतुकादहल्या
प्राप्ता शिलात्वमतिशापबलाच्च पत्युः।
तद्राघवस्य विततं कलितं कलाभिः
पादारविन्दयुगलं विमलं नतोऽस्मि ॥4॥

विद्युद्द्युतिः सा मुनिधर्मपत्नी स्वच्छान्तरा[2] सर्वमनोहराङ्गम्।
संलोकयामास पुरःशरीरमुद्यत्करं दासरथेस्तदेदम्[3]॥5॥

संसारदुःखोद्धरणेष्वमन्दं पदारविन्दं रधुनन्दनस्य।
स्मृत्यैव सम्पूरितसज्जनांशं कुर्यान्निवासं हृदये मदीये ॥6॥

नीलोत्पलश्यामलकान्तिकान्तं यच्चावृतं हेमसमाम्बरेण।
आजानुबाहुं रुचिरं परेण संशोभितं बाण-शरासनेन ॥7॥
(युग्मकम्)

1. ०धिगमस्य हेतुः, Ujj., I.O.
2. स्वस्था०, Ujj., I.O.
3. ०दैवम्, G.N.J., Pu.

प्रेमोदयोदञ्चितवर्णनेत्रं प्रायो विचित्रं रदरत्नपङ्क्त्या।
यन्मण्डितं कुण्डलमण्डनेन[1] मुखं सुखं दृष्टमलं वितेने।।8।।

पदे मुदे ये जगतामखण्डमाखण्डलेनापि धृते [2]स्वमौलौ।
[3]बालप्रवालारुणसुन्दरान्ते मुक्तिप्रदे मौलितले[4] चकार।।9।।

स्मृताऽखिलात्मस्थितिदुःखजाल-कल्लोलमालाकुलहृत्प्रदेशा।
उच्चैरहल्या हृतदुःखशल्या होपेक्षितेति प्रथमं रुरोद ।।10।।

[5]वाञ्छा न मेऽस्ति विषयेषु कदापि किञ्चि-
त्किञ्चापि चिद्विवृतिजातमहासुखेषु।
किं यातु यातु रिपुपादसरोजयुग्मं
मन्नेत्रमार्गमनिशं परिसञ्चितश्रीः।।11।।

त्वं कथ्यसे नाथ! बुधैः कृपालुः सर्वान्तरालस्थितिरप्यखण्डम्।
गतं क्व ते राघव! तत्समस्तं यत्ते[6] विभोर्विस्मरणं मदीयम्?।।12।।

[7]न विद्यते मे रघुनाथ! कोऽपि यतोऽन्तकोऽपि प्रतियाति भीतिम् ।
विना भवत्पादसरोजकोशं जानास्यशेषञ्च विभो! त्वमेतत् ।।13।।

[8]अद्यापि विद्याधिपते पते! त्वां समागते यं शरणं शरण्यम् ।
सन्तापिता दुःखशतेन तेन संसारजातेन पदे निधेया ।।14।।

[9]पारो न ते रामपते! महिम्नः सर्वेऽतिपापा अकृतानुतापाः।
कृताङ्घ्रिचिन्ता हृतदुःखकुन्ता अन्तेऽप्यनन्ताश्रयमाश्रयन्ते ।।15।।

---

1. ०लेन, Ujj., I.O.
2. शिरोऽन्ते, Ujj., I.O.
3. सिन्दूरसारान्तर, Ujj., I.O.
4. स्वहृदा दधार, G.N.J.
5. अधिकः पाठः, Ujj., I.O.
6. जातं, Ujj., I.O.
7. अधिकः पाठः, Ujj., I.O.
8. अधिकः पाठः, Ujj., I.O.
9. अधिकः पाठः Ujj., I.O.

नैवात्र काचित्सुभगा मयान्या [1]पुण्याङ्घ्रधूलीविमलीकृताङ्गाः।
या चापि नेत्रेण पवित्रकीर्त्तेः श्रीराममूर्त्तिं तव लोकयामि ।।16।।

योषित्स्वभावदतिमूढबुद्धिः [2]पदवीक्षणाद् वेद्मि तव स्वरूपम्।
योऽगोचरः सर्वचराचराणां स एव रामो भगवानसि त्वम्।।17।।

व्याप्याप्यशेषानपि यो विशेषान्प्रकाशयत्यादित एक एव[3]।
किञ्च प्रकाशः स्वत एव यस्य स एव रामो भगवानसि त्वम् ।।18।।

भारापहारं प्रविधातुमेतत्[4] क्षोणीतलस्याधिगतोऽवतारम् ।
मायावशादत्र विचित्ररूपः स एव रामो भगवानसि त्वम् ।।19।।

जातो यतोऽयं सकलोऽपि लोकस्तस्यापि[5] पोषो यत एव नाशः।
ब्रह्मादिरूपं प्रविधाय देवः स एव रामो भगवानसि त्वम् ।।20।।

क्लेशान्निहन्तुं निजसेवकस्य कामांश्च[6] दातुं सकलान्नृसिंहः।
स्तम्भादहो! [7]यो जननं प्रपेदे स एव रामो भगवानसि त्वम् ।।21।।

कालेऽम्बुराशेर्मथनस्य नाथ! कूर्मोऽपि[8] शर्मप्रतिपादनाय।
पृष्ठेऽदरं मन्दरमुद्दधार स एव रामो भगवानसि त्वम्।।22।।

पादत्रयं यस्य जगत्त्रयञ्च जातं समस्तं बलियागकाले।
सतां मनो यत्र च वामनोऽसौ स एव रामो भगवानसि त्वम् ।।23।।

[9]अलङ्कृतिर्येन कृतान्वयस्य भृगोश्च राजन्पदवीं दधानः।
क्रूरोऽग्रधारं स्वकरे कुठारं स एव रामो भगवानसि त्वम् ।।24।।

---

1. धन्याङ्घ्रिरेणुप्रकरप्रमृष्टा, G.N.J,
2. पादावलोकात्तव वेद्मि रूपम्, Ujj. I.O.
3. करोति येषामपि यः प्रकाशम्, Ujj. I.O.
4. ०मद्य, G.N.J.
5. ०कः पोषं विनाशं च करोति तस्य, Ujj., I.O.
6. ०मान्प्रदातुं परमा०, G.N.J.
7. जन्म विभो ! प्रयातं, G.N.J.
8. ०ति० G.N.J.
9. अधिकः पाठः Ujj. I.O.

[1]यदा यदा स्वीयपदाश्रयाणां विचिन्त्यते साधुजनैरनिष्टम्।
तदा तदा स्वीकुरुते शरीरं स एव रामो भगवानसि त्वम् ।।25।।

सक्ता स्मृतौ यस्य विविक्तचित्ताः शूद्रादयो येऽपि च नीचजाताः।
तरन्ति माया-जलधिं सुखेन स एव रामो भगवानसि त्वम् ।।26।।

[2]यन्मायया मोहितचेतसो ये शरीरभाजः सकला विमूढाः।
जानन्त्यनादिं मनुजस्वरूपं स एव रामो भगवानसि त्वम् ।।27।।

आकृष्य चेताः सकलप्रपञ्चादेकान्तवासा विगतप्रयासाः।
जानन्ति यं योगविदः कदाचित्स एव रामो भगवानसि त्वम् ।।28।।

[3]अवेदि वेदैर्यदसंख्यभेदैर्युतं न चिद्रूपमनन्यसाम्यम्।
यस्य प्रशस्याकृतिशोभितस्ते स एव रामो भगवानसि त्वम्।।29।।

नो भासतेऽज्ञानसमावृतो यस्तस्यापि नाशे स्वयमेव भाति।
यथांशुमाली जलदालिनाशे स एव रामो भगवानसि त्वम् ।।30।।

यद्भानलेशादपि ये विशेषाःकोशात्मजाद्या भवसम्भवास्ते।
नृणां तृणाकारतया विभान्ति स एव रामो भगवानसि त्वम्।।31।।

सिक्तेन किञ्चित्प्रियता-रसेन सम्भावितं येन हृदाऽभिधानम्।
भवस्य नैवास्य च सम्भवः स्यात्स एव रामो भगवानसि त्वम् ।।32।।

[4]निरन्तरं योऽन्तरगो जनानां जगन्निवासो जगति प्रतिष्ठः।
नो योगमायाति च कर्मसंघैस्स एव रामो भगवानसि त्वम् ।।33।।

मणिर्यथायं स्फटिकाभिधानः संभासते सङ्गवशात्तदाभः।
[5]तथैव यः स्वच्छतरः परात्मा स एव रामो भगवानसि त्वम्।।34।।

---

1. अधिकः पाठः Ujj. I.O.
2. अधिकः पाठः, G.N.J.
3. अधिकः पाठः, G.N.J.
4. नृत्यं करोत्यन्तरतः शरीरेष्वेतेषु नित्यं स जगन्निवासः, G.N.J.
5. आनन्दरूपस्तु तथैव लोके, G.N.J.

क्रियापरो भाति परक्रियाभिर्मेघैश्चलद्भिश्चलनं यथेन्दोः।
मायागतिर्यस्य सदेति चित्रा स एव रामो भगवानसि त्वम्।।35।।

पाषाणतुल्यं जडमेव सर्वं पूर्णं सताऽनेन निरीक्षितं तत्।
सचेतनं जातमनन्तशक्तिः स एव रामो भगवानसि त्वम्।।36।।

गन्धग्रहे घ्राणमथो रसज्ञा ज्ञाने रसस्येक्षणमीक्षणेऽस्य[1]।
श्रुतिः श्रुतौ शक्तिमपि[2] प्रयाति स एव रामो भगवानसि त्वम् ।।37।।

[3]सङ्गोऽमलस्यास्ति न यत्र किञ्चिन्निरञ्जने ब्रह्मणि शुद्धरूपे।
अनन्तसंज्ञे गगने यथेश स एव रामो भगवानसि त्वम् ।।38।।

[4]न ज्ञानमन्यस्य समीक्ष्यतेऽस्य ज्ञाने स्वयं ज्ञानधनस्य किञ्चित्।
यथा प्रकाशे दिवसाधिपस्य स एव रामो भगवानसि त्वम् ।।39।।

केचित्प्रवीणा प्रणये श्रुतीनां कृत्वा निषेधं सकलाश्रयाणाम्।
जानन्त्यतः किञ्चिदिहावशिष्टं स एव रामो भगवानसि त्वम् ।।40।।

[5]यस्यांशुजालैरयमुशुमाली संशोभते सर्वदिगन्तरेषु।
नाथो निशाया अपि चित्रभानुः स एव रामो भगवानसि त्वम्।।41।।

[6]नो विद्यते यस्य सुखं न दुःखं द्वेषोऽपि लोभो न च कामवाञ्छा।
न भीतिरासादितसर्वकामः स एव रामो भगवानसि त्वम् ।।42।।

[7]किञ्चाप्यसौ तिष्ठति सर्वदाऽन्ते बहिःप्रदेशे परितः परात्मा।
आकाशवत्सर्वगतोऽप्यसङ्गः स एव रामो भगवानसि त्वम् ।।43।।

---

1. ०क्षणस्य, G.N.J.
2. ०ति, G.N.J.
3. अधिकः पाठः, G.N.J.
4. अधिकः पाठः, G.N.J.
5. अधिकः पाठः, Ujj., I.O.
6. अधिकः पाठः, G.N.J., Pu.
7. अधिकः पाठः, G.N.J., Pu.

अनन्तसंसारसमर्जितेन व्यपेतसंख्येन वृषोच्चयेन।
प्राप्तिर्यदीया [1]तदखण्डमेकं स एव रामो भगवानसि त्वम् ।।44।।

नीता यया मोहमहो शिवाद्याः किं वर्णनीयो महिमा तदीयः।
सा किङ्करी यस्य सदैव माया नायात्यसौ लोकविलोक्यभावम् ।।45।।

[2]लाभो महान् योऽपि सुखं महद्यज्ज्ञेयं परं दृश्यमपि प्रकृष्टम्।
नान्यद्यतस्तत्परमं स्वरूपं स एव रामो भगवानसि त्वम्।।46।।

[3]ह्रस्वं न दीर्घं न कृशं महद्वा नो जायते यन्न विनाशमेति।
तद् ब्रह्मजिह्माशयदूरवर्ति स एव रामो भगवानसि त्वम्।।47।।

[4]अज्ञानतो यस्य विभाति सर्वं जगत्प्रभिन्नं न तथावभासो।
विज्ञानरूपस्य जगन्निवासः स एव रामो भगवानसि त्वम्।।48।।

[5]इत्थन्धरासर्वधराधरेन्द्रैः साकं समुद्रैरपि वीतमुद्रैः।
कृताकृतो यः स्वयमन्तरात्मा स एव रामो भगवानसि त्वम् ।।49।।

[6]यन्नाममाला हृतपापजाला कालाहितां भीतिमपाकरोति।
गोविन्द-विष्णोऽच्युत-माधवेति स एव रामो भगवानसि त्वम् ।।50।।

[7]लवो यदि स्यान्मनुजे कृपायास्तदा ह्यपापा भवजास्त्रदीपाः।
अभावमायान्त्यखिला कृपालोः! स एव रामो भगवानसि त्वम् ।।51।।

धेनुर्ध्रुवं कामदुधाऽप्यधाना[8] मोघा निदाघादिव [9]वारिपूराः।
[10]नाशं यतो यान्ति भवेच्च मुक्तिर्भक्तिर्विधेया रघुनन्दनस्य[11]।।52।।

---

1. विदुषां कदाचित्, Ujj. I.O.
2. अधिकः पाठः G.N.J., Pu.
3. अधिकः पाठः G.N.J., Pu.
4. अधिकः पाठः G.N.J., Pu.
5. अधिकः पाठः G.N.J., Pu.
6. अधिकः पाठः G.N.J., Pu.
7. अधिकः पाठः G.N.J., Pu.
8. कामधुगस्त्यधाना, Ujj., I.O.
9. नीर०, G.N.J.
10. कुत्रापि गच्छन्ति सुखेन, G.N.J.
11. ०नायकस्य, G.N.J.

एवं स्तवं श्रीरघुनन्दनस्य विधाय पत्नी मुनिपुङ्गवस्य।
कृतापराधां परिपाहि [1]दीनामुक्त्वेति पादे पतिता जगाद।।53।।

स्वामिन् श्रीरघुनाथ! दीनकरुणासिन्धो त्रिलोकीपते!
प्रोक्तैः किं बहुभिः सुदीनवचनैरेकं वचः श्रूयताम् ।
याताऽहं शरणं त्वदीयचरणं सर्वापदां वारणं
सौख्यानामपि कारणं प्रपततामुद्धारणं किं पुनः?।।54।।

केषामस्तु पिता प्रसूरपि सुता भ्राता सुहृद्वा सखा
शिष्यः प्रेष्य उतापि गोत्रजननः कायः सहायस्तथा।
यस्याङ्घ्रिस्मरणाद् भवेन्न मरणाद्भीतिः कदाचिन्नृणां
सर्वं मे रघुनाथ एव जगतां नाथः किमन्यैरिह?।।55।।

रामचन्द्र-पदं सेव्यं नो सेव्यं देवतान्तरम्।
मया तत्स्पर्शतः प्राप्तं नैतत् प्राप्तं सुरैरपि।।56।।

धात्रा-सङ्गाद् बुधाः भृङ्गाः सदानन्दादवस्थिताः।
रामचन्द्राङ्घ्रि-कमलं कमलं प्रकरोतु तत्।।57।।

यत्रोल्लसन्नखसुधाकरविम्बमाला
कालानलादुदितमप्यपहन्ति तापम्।
राजीवकोमलदलारुणकान्तिकान्तं
श्रीरामपादयुगलं हृदलङ्करोतु।।58।।

पूर्णाऽशामरनभ्रमौलिविलुलन्मालागलत्केसर-
व्रातोत्पन्नभरश्रमोद्गमपयोबिन्दूदयैर्मेदुरः ।
रामालम्बनतां प्रयातु विततस्त्वत्पादपोतश्श्रिरं
मध्ये संसृतिभीषणार्णवजलं पातुं गताया मम।।59।।

भव-सागरमग्नस्य देहिनो दीनचेतसः।
नान्यदालम्बनं लोके राम! त्वत्पादपोततः।।60।।

[2]केषामपि च कोऽप्यस्तु प्राणत्राणपरायणः।
एतस्याः केवलं राम! शरणं चरणं तव ।।61।।

1. राम! प्रोक्तेति, G.N.J.
2. अधिकः पाठः, I.O.

प्रक्षिपाम्यनलेऽङ्गुष्ठं राम! ते रजसावृतम्।
पाहि मां भवतो भीतां नातः ख्यातं कृपावचः।।62।।

उद्धृतः सुखतो राम! पाषाणेति जडोऽधुना।
प्रभावं तव पादस्य जानाम्यनुभवादपि।।63।।

अनेकेषामनेकानि जीवनानि भवन्तु हि।
जीवनन्तु ममैवैकं रामचन्द्र-पदाम्बुजम्।।64।।

तनौ चेद्यद्रजोलग्नं दुःखे मग्नं समुद्धरेत्।
तत्पदं रामचन्द्रस्य को वा मुञ्चतु भाग्यवान्?।।65।।

आलोकितमिदं लोकं विशोकं कुरुते जनम्।
तत्पदं मानसे मेऽस्तु सततं राम! तावकम्।।66।।

स्मरणाज्जायते शुद्धिर्बुद्धेरपि मलात्मनः।
न मुञ्चतु कदाप्येतत् मच्छिरोऽपि गुरोःपदम्।।67।।

यदम्भसङ्गिपयसः कणश्चेत् क्षणभङ्गगः।
तज्जन्मभीतिहरणं चरणं शरणं मम।।68।।

आलोकितं पदं येन राम! ते परमं त्विदम्।
कथं भवतु दूरेऽस्य राम! ते परमं पदम्?।।69।।

कुलञ्च पापाकुलमेव जाने यद्यप्यनेकाचरणप्रचारम्।
न दैवतं यत्र पवित्रकीर्त्तिः श्रीरामचन्द्राभिधमत्यपूर्वम्।।70।।

रामाग्रजन्माभिमतः स एव जातोऽपि जातौ मनुजोऽवमायाम्।
त्वन्नामसन्ध्याध्ययनेन वन्ध्या घनास्तमिस्त्राश्च न यान्ति यस्य।।71।।

श्रीराम! एषा बहुलप्रकाशा वर्णत्रयी भात्यनलत्रयीव।
ओघाऽनघानां परिहृत्य दूरे पारे भवं प्रापयति प्रपन्नान्।।72।।

रामराज! कदापि स्यात् कोपश्चेत्तावको मयि।
[1]वज्रस्याप्याहतिर्देया न देया विस्मृतिस्तव।।73।।

1. चित्रस्याप्याहु०, I.O.

राम! याचे प्रणम्याङ्घ्रिं भवन्तं कल्पपादपम्।
नापसर्पतु[1] ते नाम कदाचिदपि मन्मुखात् ।।74।।

नाहं बहु विभो! याचे कृपा चेत्त्वज्जने मयि ।
एकं देयं सदेयं मे त्वय्यस्तु हृदयस्थितिः ।।75।।

दासीं राम! निरन्तरं [2]स्वचरणे संस्थापयैनां भृशं
कार्यं याचनयान्यया न हि विभो! सेवारते वर्त्तते।
एतच्चाप्यखिलं किलातिचपलं सङ्गेऽप्यलं निष्फलं
ज्ञात्वाप्यत्र दधातु को नु हृदयं यश्चाप्ययं ज्ञानवान्?।।76।।

कृत्यं न मे राघव! पुण्यलोकैः शोकैकगेहैरपि देव! देहैः।
याचेऽनया चेत् स्वगिरातितुष्टिं दृष्टेरखण्डं न कुतोऽपि पाहि?।।77।।

निर्मलाः सुखकरा अतिशीता रामचन्द्रमुखचन्द्रमयूखाः।
मानसे मम भजन्ति विकाशं पाप-तापनिवहान्न वहामि ।।78।।

उत्तारयेद् यस्तृणमुत्तमाङ्गात्तस्योपकारं कृतिनः स्मरन्ति।
येनार्पिता लोककृतानृतास्मै तद्विस्मृतिश्चेदपरं किमागः?।।79।।

रामचन्द्र-पदाम्भोजं भो जन्तो! हृदये कुरु।
शीतलं भविता तेन तत्तप्तं दुःखवह्निभिः।।80।।

आयातादतिकोपेन निहन्तुं समवर्त्तिनः।
रक्षणं [3]सक्षणं प्रोक्तं यत् क्षणं रामलक्षणम् ।।81।।

विना स्मृतिं श्रीरघुनन्दनस्य नान्यत् त्वया कर्म मनो विधेयम् ।
स्याद्येन भूयो भवतोऽपि तापः पाप-प्रपञ्चैकनिकेतनत्वम् ।।82।।

यत्स्मृतेरपि दीर्घोऽयं भवरोगः प्रणश्यति।
तत्कथं त्यज्यते मूढ! रामनाम- महौषधम्?।।83।।

---

1. ०रतु, I.O.
2. हि, I.O.
3. सोत्सवं, Ujj.,

पापभारं कुतः स्फारं [1]हारं वहसि दुर्मते!।
एकवारं श्रुतेः सारं नाम रामस्य कीर्त्तय।।84।।

विधाय शपथं चास्यावितथं प्रोच्यते वचः।
मनोविनोदितारामं रामं नास्ति भवार्तिहृत्।।85।।

श्रवणे! श्रवणं नाम्नो रामस्य रमणं कुरु।
रसतात् रसनेऽखण्डं नो चेद् दण्डं करोम्यहम्।।86।।

दुःसाध्या राम! ते सेवा अपि देवादिभिः प्रभो!।
अहं तु प्रत्यहं कुर्वे सर्वेशामृतिदां स्मृतिम्।।87।।

पितः कृतः श्रीरघुनाथ! तेन भर्त्ता ममानुग्रह एव शापः।
जातो यतोऽयं करुणासमुद्रः साक्षात्परं ब्रह्म स रामचन्द्रः।।88।।

लक्ष्मीलेशयुतः सतोऽपि पुरतो नाहङ्कृतेर्वीक्षते
भूपाः [2]केचन गर्वपर्वतपरिक्रान्ता दृशोर्गोचराः।
दूराद्दूरतरा धराधिपवराः सेवापराणामपि
त्रैलोक्याधिपतिस्तथा रघुपतिः स्याच्चेद् गतिः काऽसताम्?।।89।।

एतद्वचश्चन्द्ररुचःप्रसङ्गे समुल्लसन्मानसकैरवः सः।
रामोऽवदत्तां तनुजे तथास्तु पाठात् स्तवस्यापि निजेष्टलब्धिः।।90।।

मुक्तिं प्रणीता वनिता द्विजस्य या चापि नीता गुरुणा शिलात्वम्।
चित्ते मदीये सततं करोतु तत् श्रीपदं रामपदं निवासम्।।91।।

[3]माता त्वं जनकोऽपि कोऽपि दयितो भ्राता च ताताग्रजः
श्रेयान्सत्सुहृदीश्वरो वरसखा योऽसौ सुखानां निधिः।
पूज्यो मातुल आकुलः प्रियतया देवोऽपि सेवोचितः।
सम्बन्धात्त्वयि राघवेति बहवो मे तत्फलं दर्शितम् ।।92।।

---

1. वारं वारं वहस्यरे!, Ujj.
2. केवल॰, I.O.
3. अधिकः पाठः G.N.J., Pu.

[1]त्वं याहि सौख्यं दयितेन साकं सञ्चिन्तयन्ती चरणौ मदीयौ।
त्वया स्तवोऽयं विहितोऽस्य पाठात्कामाप्तिरस्तु प्रियमाह रामः।।93।।

कृत्वा सुगात्रीं द्रुहिणस्य पुत्रीं च्छत्रीकृतं येन यशो विशुद्धम् ।
नाहं विना तं रघुवंशकेतुं भवाब्धिसेतुं कमपि श्रयामि ।।94।।

यस्याङ्गसङ्गादभवत्सदङ्गा पाषाणभूता मुनिवर्यकान्ता।
तं राममादाय मुनिः सहर्षं शीघ्रं प्रपेदे मिथिलेशदेशम् ।।95।।

हा! हा! जना यान्ति भवोत्थखेदं नैते पदं तत् सुखदं श्रयन्ते ।
कृपानिधेरेवमुवाच भूयो भूयः स गच्छन् हृदि जातचित्रः।।96।।

उपवने पवनेरितसुश्रमस्तपनवंशसुधाकरकिङ्करः[2]।
तरुकदम्बतले [3]विमले वसन्परमवाप सुखं मुनिसत्तमः ।।97।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्य-*
*दिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैतविरचिते*
*'अहल्यास्तुति'र्नाम सप्तमः सर्गः।*



---

1. अधिकः पाठः G.N.J., Pu.
2. ०संयुतः, G.N.J., Pu.
3. जलशीतले सुखमवाप परं निवसन्मुनिः, Ujj., I.O.
   वसतिं सती मुनिवरो विदधेऽतिसुखान्वितः, Pu.

# अष्टमः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ।।1।।

बहिः पुरः साधुवरं निशम्य समागतं कौशिकमुग्रदीप्तिम्।
राजा विदेहः परिपूरितेहः स्नेहार्द्रचेताः पुर आजगाम।।2।।

इला-मिलत्कुन्तलसत्कलापं [1]देवैर्दुरापं चरणद्वयं तत्।
महानयो मे विनयोदयेन वदन् ववन्दे स तपोधनस्य।।3।।

वंशोद्य वंशोन्नतिशोभमानो मानोदयेनापि तले धरायाः।
जातो यतो यज्जनिना मयेदं दृष्टं पदं ते [2]नयनद्वयेन।।4।।

कृतातिपूजा विधितोषितेन राजा विदेहोऽपि च कौशिकेन।
आशीर्वचोवर्द्धितगौरवस्तत्सन्दर्शितं [3]स्वासनमाससाद।।5।।

स्थितौ मुनेर्दक्षिणतो विदूरे पूरेण कान्त्या जनितप्रकाशौ।
दृष्टावदृष्टातिशयेन राज्ञा श्रीराघवौ [4]किं रवि-चन्द्रबिम्बौ?।।6।।

ददद् दृशं तद्वपुषो भृशं स स्पृशन्महानन्दभरं धरेशः।
मौलाविमौ किं सुकृतस्य लीला-परेण धात्रा रचिताववादीत् ।।7।।

---

1. प्रायो दु॰, Ujj., I.O.
2. वद देवमेनम्, G.N.J., Pu.
3. चा॰, G.N.J., Pu.
4. मन्मथ-सन्मथौ तौ, G.N.J., Pu.

[1]ज्ञात्वा नृपं विस्मयसन्नचित्तं संवीक्षणाद् राजकुमारकान्त्या।
सशंस सर्वं [2]मिथिलेश्वराय तत्कौतुकाकर्णनसन्मुखाय।।8।।

जातो भानुकुलेऽमले दशरथो यत्कीर्त्तिजालैर्जगद्
व्याप्तं तत्तनुजाविमौ नरपते! सम्प्रार्थितौ तं मया।
यज्ञे विघ्नचयं सदा विदधतां रक्षोगणानां क्षये
कृत्वा तत्सकलं महेश्वरधनुर्द्रष्टुं प्रयाताविह।।9।।

जाताः सनाथा वयमद्य नाथा लोकस्य याता [3]भवनं भवन्तः।
एवं विदेहाधिपतिर्यतीशं पुनः पुनः प्राञ्जलिरावभाषे।।10।।

एतस्य सीता वनिता यदि स्यात् स्वर्णस्य माणिक्यसमाधियोगात्।
तदैव धाता चतुरोऽन्यथाऽसौ[4] मौर्ख्यातुरः सम्मनुतेस्म राजा।।11।।

किञ्चाऽवदद् हा! पण एष दोष-कोषः प्रणाशो यत इष्टसिद्धेः।
पाणेर्न माणिक्यमिदं नराणां योग्यं सभाग्यं ग्रहणे सुतायाः।।12।।

घोषैः श्रुतीनां द्विजनुःप्रणीतैः स्फीतैश्च वादित्रशतप्रणादैः।
[5]वेत्रं स्वहस्ते जनको निधाय पुरस्सरस्तान् पुरमानिनाय।।13।।

हा! हा! गतः क्वायमुदारहारो रूपस्य पारो न नरोत्तमस्य।
विहाय मामस्फुटवाग् वदन्ती सीता रुदन्ती व्रजतिस्म बोधम्।।14।।

किं जातमार्ये! हृदयेन धैर्यं धार्यं विचार्यं निजमेव कार्यम्।
त्यक्त्वा भ्रमं तत् क्रमतो निकामं वदेति भीतालिरुवाच सीताम्।।15।।

तदा सखिं प्रातरुवाच सीता प्रीतान्तराला प्रियदर्शनेन।
स्वप्ने मयाऽदर्शि सुदर्शनास्यस्तमालनीलः पुरुषः सुशीलः।।16।।

सौन्दर्यमुद्रामभिवीक्ष्य चन्द्राननस्य तन्द्रा हृदि हाससान्द्रा।
संवृद्धकामं च बभूव वामं चेतो निकामं मम मोहभावात्।।17।।

---

1. स कौशिको विस्मितमानसायं, Ujj., I.O.
2. नरनायकाय तद्वर्णनाकर्णनलालसाय, Ujj., I.O.
3. सदनं, G.N.J.
4. ०ज्यं, G.N.J., Pu.
5. हस्तात्ततोत्रो जनकः पुरोगः सन्तोषिणस्तान्, Ujj., I.O.

किं वर्णनीयं सखि! तस्य रूपं यस्यानुरूपं न हि किञ्चिदेव?।
दृष्टं मया क्वापि हि वस्तु लोके सर्वं विवेकेन वदाम्यदस्त्वाम्।।18।।

भुजौ भुजङ्गाकृतिशोभमानौ यस्यापि नेत्रे जितपद्मपत्रे।
मुखं सुखं दृष्टमलं ददाति हासः प्रिये! त्रासमपाकरोति ।।19।।

नासाऽपि नासावपि कीरचञ्चुः किञ्चित्समाकुञ्चितसुन्दराग्रा।
दन्ताः सदन्ता जितकुन्दवृन्दाः कन्दाः श्रियं किं सखि! वर्णयामि?।।20।।

दृष्टा मया तत्स्पृहयातिशिष्टा नष्टाखिलाज्ञानकलाऽमलाङ्गाः।
श्रीरामरामेति पदं वदन्तस्तदन्तिके प्रेमगलज्जलाक्षाः।।21।।

केचित् पदाम्भोभवपत्रनेत्राः द्वित्राः पवित्रार्थनुतिं पठन्तः।
अनन्यचिन्ता मम लोचनान्तांश्चक्रुः प्रिये! वीक्षणतः कृतार्थान् ।।22।।

जाने ततो भाग्यवतोऽवतोऽस्य कल्याणमालाकुलविग्रहस्य।
अनेकपापप्रभवोग्रताप-प्रणाशनं नाम च राम-एवम् ।।23।।

त्वं पाहि दीनानथ दीननाथ! किञ्चाप्यनाथे करुणासमुद्रः।
श्रुत्वा सदुक्तं परमार्थयुक्तं व्यक्तं मनोऽभूत्सुधयाऽभिषिक्तम्।।24।।

ऊचुः पुनः केचिदुदञ्चिताक्षास्तत्पादवीक्षाऽमृतपानदक्षाः।
अशक्यविज्ञानकलाऽमलाय कालातिकालाय नमो नमस्ते।।25।।

केचित् प्रिये! तत्पददत्तहस्ता त्रस्ता भवात् प्रादुरभूदभूतात्।
व्यस्तं समस्तं च जगत् कुतस्तं जानीम एनं निजकामधेनुम्।।26।।

केचिन्नतास्तस्य पदारविन्दे कुन्देन्दुशुद्धाचरणा वदन्तः।
त्राता भव त्वं भवसम्भवेन केनापि दुःखेन सुदुःखितानाम्।।27।।

विज्ञानमेतत्तु मया वयस्ये! यस्याङ्घ्रिदास्ये विरता रतास्ते।
त्रैलोक्यपालो निरपेतकालो दुर्ज्ञेयशीलो भगवानयं सः।।28।।

ज्ञातं मयाऽयं पुरुषेषु रत्नं यत्नान् बहून् यद्भजने चरन्ति।
बुधाः सुधादीधितिसुन्दरास्यः स्यादस्य दास्ये मम नाधिकारः।।29।।

[1]मालाऽमलानामतिकोमलानां श्रीसङ्कुलानां तुलसीदलानाम्।
आलोकिता कण्ठगता ततोऽस्य [2]कामप्रकामोत्तमविग्रहस्य।।30।।

मग्नाहमानन्दपयोधिमध्ये तद्ध्येयमालोक्य नरेन्द्ररूपम्।
जाता तदालिङ्गनकर्मसज्जा [3]लज्जापरं वैरभरं वितेने।।31।।

तत्रापि धात्राचरितस्तु सत्रा मया दयाशून्यहृदाऽरिभावः।
नीताऽवसानं सहसा निशा सा हा! हा! निराशाऽभवमेव भूयः।।32।।

नूनं विधातर्भवता ममान्तः कृतस्ततस्त्वं तु मतः कृतान्तः।
सुखैरतृप्ता सहसैव नीता बोधं दुरन्ता विरताह सीता।।33।।

जाता तदा विभ्रमसङ्कुलाहं तद्रूपकामेषु शतक्षताङ्गा।
लेभे सखीभावमलं धृतिर्मे धृता ततोऽपूर्ववृषोदयेन।।34।।

कदेदृशं स्यात् पुनरद्य रूपं दृग्गोचरं वीतविधेरमुष्याः।
एवं समासादितदुःखभारा सीताश्रुधारार्द्रहृदा बभाषे।।35।।

वासं त्यजन्ती बहुदुःखभाराद् धीरातिभीरापि धरातनूजा।
विहाय धैर्यं करुणास्वरेण हा! राम! रामेति शनैरवोचत्।।36।।

किञ्चिद् विवक्षुर्मयि दत्तचक्षुर्दिक्षुप्रकाशं दशनैर्वितन्वन्।
हा! वारितो दुर्विधिनैव नैव सदैवमुच्चैः किमपि ह्यवोचत्।।37।।

स्मृत्वा पुनस्तस्य शरीरशोभामलौकिकं विस्मृतलौकिका सा।
विहाय लज्जामपि भूरिलज्जा रुरोद तज्ज्ञाननियोगदुःखात्।।38।।

दृशा कृशाकारसरोजनेत्रं सवारिवारिप्रदनीलगात्रम्।
सदा सदाराध्य-पदारविन्दं रामं निकामं कलयेऽस्तखेदम्।।39।।

न ज्ञायते भालतले मदीये लिपिः कथं हा! लिखिता विधात्रा?।
स्वप्नेऽपि यो गो-पुरुषस्य भोगोचितोऽभवन्नास्फुटमाह सीता।।40।।

---

1. ऽमलानामपि, I.O.
2. नीलोत्पलानीलकलेवरस्य, Ujj. I.O.
3. वामा विरामाय बभूव लज्जा, I.O.

विभूषणाभूषितरम्यगात्रो वस्त्रेण पीतेन वृतो मनोज्ञः।
प्रेमाकुलाम्भोरुहलोचनेन मामीक्षते तावदहं प्रबुद्धा।।41।।

त्वां वच्मि किञ्चित् सखि! मानसस्थं त्वत्तः प्रिया नैव परा मदीया।
आलोक्य तं लोकमणिं फणीन्द्र-हस्तं प्रशस्तं बहु मे हृदोऽभूत् ।।42।।

नायं दृशोर्दूरमतः प्रयातु जातु प्रियेऽभूद् हृदये ममेति।
अगण्यलावण्यलसत्तरङ्ग-सङ्गोत्सुकाहं त्रपयाऽवरुद्धा ।।43।।

यथार्थमेवार्थविदं वदामि त्वामालि! शालीनतया श्रृणुष्व।
तथैव दैवोदयलभ्यपादः खेदं हरन् चारुतरः पुरोऽस्ति ।।44।।

विलोकयालि! प्रियनेत्रपालिः साकं च दोषास्फुरणं करोति।
वक्षोऽपि विक्षोभमुरोजदेशे जाने स्वदेशे शुभमस्ति भूरि ।।45।।

स्वप्नार्थविज्ञानकलाप्रवीणा वीणाप्रिया काचिदिदं सखी सा।
[1]प्रोवाच सीतामभिरामवस्तु प्राप्यं त्वया नास्त्यपरो विचारः।।46।।

आकर्ण्य वाक्यं हृदयप्रियायास्तस्या वयस्या सुमनोहरायाः।
आनन्दजास्रा परिधानवस्त्रे ग्रन्थिं वितेने शकुनाय सीता ।।47।।

किञ्चाप्यवादीद् वचनं सहर्षा तर्षाकुला वल्लभसङ्गमे सा ।
भूयाद् वयस्ये! वदनं त्वदीयं ताम्बूलवल्लीदलचूर्णपूर्णम् ।।48।।

काले सुमित्रेक्षणलेशमात्रे याते तदैवायतनं सुखानाम्।
सुश्राव नादं जनकस्य पुत्री विचित्र-वादित्रसमूहजातम् ।।49।।

अपृच्छदेषा सहसा सतोषा योषाजनं [2]बाह्यसदः प्रयातम्।
[3]विचित्रवादित्रनिनादमाला कोलाहलश्चापि कुतो जनानाम्? ।।50।।

उवाच तां श्वासभरातुराङ्गी [4]काचित्कुरङ्गी-नयना सहर्षा।
समागताहं त्वरया प्रवक्तुं कुतूहलं यद्भवति प्रकृष्टम्।।51।।

---

1. उवाच, Ujj., I.O.
2. चाप्त०, Ujj.
3. अनेक, G.N.J., Pu.
4. याता प्रवक्तुं त्वरया तदैव
   यज्जायते कौतुकमन्तराले पुनश्च रामागमनप्रभूतम्।।G.N.J., Pu.

आनन्दपूराकुलमानसा सा वेगात्परं श्वासभरं त्यजन्ती।
आख्यातुमेतद् भवतीं प्रयाता तामाह हासोल्लसदानानान्ता।।52।।

विशालभाले! जनकेन्द्रबाले! गेहान्तराले कथमास्थितासि?।
रामाभिधानं महसां निधानं राजासमानं तदलङ्करोति ।।53।।

किं वच्मि सीते! विधिसम्परीते प्रायो विनीते गुण-गौरवेण।
दृष्टे जनेष्टे नयनेन रामे नामेति कुत्रापि मनो जनानाम्।।54।।

वदामि सत्यं मिथिलेशकन्ये! नैतादृगन्येन कदापि दृष्टम्।
रूपं धरायामपि नागलोके केनाप्यनेकेन्द्रनिकेतनाके ।।55।।

[1]उक्तं पुनः केन च पण्डितेन नियुज्य पाणी पुरतः स्थितेन।
नमस्त्रिलोकीपरिपालकाय भूयो नमस्ते पुरुषोत्तमाय ।।56।।

[2]श्रोतव्यमन्यत्कमलाभनेत्रे! चञ्चच्चरित्रेऽस्य शरीरजातैः।
मरीचिजालैर्वियदन्तकालैर्निलीकृतं राजगृहं समस्तम् ।।57।।

अस्माभिरालोकित एव दूरादारात्तगन्तुं महसावकाशः।
तथापि तापो निहतो दृशां नः श्रीरामचन्द्रेण न चित्रमेतत् ।।58।।

[3]विलोकितः काभिरलं गुणानां निधिर्बधूभिस्स च रामचन्द्रः।
व्यामोहभावाद् भ्रमिताः समक्षमस्माकमेताः सविताः धरण्याम् ।।59।।

कुर्वन्तु केषां सुखमत्र देवाः सेवाभरैर्दृष्टिपथं प्रयाताः।
संसारपूरोदितखेदखिन्नः विश्रामचन्द्रः किल रामचन्द्रः।।60।।

चेतः प्रसादं जनयत्वसंख्याः [4]संख्यावतामप्यपरे परेऽर्थाः।
दुःखातुराणां जननैर्जनानां विश्रामभूमिर्न हि रामतोऽन्या ।।61।।

वक्तव्यमेतत् किमु पुण्यशीले! विदेहबाले! सरले! विचित्रम्।
प्रोच्चारणादेव पवित्रनाम्नो रामस्य जातं मम हृत् सुशीतम् ।।62।।

---

1. अधिकः पाठः I.O.
2. अधिकः पाठः I.O.
3. अधिकः पाठः, I.O.
4. संख्यावताम् = धीमतामित्यादर्शमातृका स्पष्टयति।

जानेऽस्य चानेकमहोत्सवस्य नामापि रामेति कृतं कृतीशैः।
रसं रसालार्थभवं समग्रमादाय नो चेत्सुरसं कथं तत्?।।63।।

उपस्थितः पुण्यचयः प्रिये! मे जाने सहायः किल पूर्वजानाम्।
नालोचितं तेन सुलोचनेन विलोचनेऽत्रागमनं कुतः स्यात्? ।।64।।

मया कृतं किं सुकृतोच्चयेन सीतेऽमितेन त्वदुपार्जितेन।
समावृते पाणियुगेन नेत्रे पुण्यैः पवित्रे सहसा मदीये।।65।।

चेत् स्मर्यते श्रीरमणस्य नेत्रं मित्रं प्रिये! यत्सरसीरुहस्य।
वैक्लव्यमायाति तदैव गात्रं चित्रं महत्तत्कथयामि भूयः।।66।।

रूपस्मृतेरस्य मृतेव जाता भ्रान्ताऽहमेतत्किमु वर्णयामि।
भवेत्समाजो यदि ते वृषाणां सर्वंदृशानामसि किं त्वमद्य?।।67।।

नायं कृतो लोककृता विधात्रा तत्रापि हेतुं सुभगे! वदामि।
कौशल्यमेतन्न भवेद् विरञ्चौ तच्चेत्कथं नेदृशमातनोति?।।68।।

[1]ऊचे विरञ्चे! भवता चिरं चेद् विधाय यत्नं रघुनाथदेहम्।
कृतं वृथैतत् सुकृतैकपाकः को वा वराकः करणेऽस्य शक्तः?।।69।।

रोमाञ्चिताङ्गावलिरालि! पाणिं धृत्वोल्लसत्कञ्चुकसन्धिबन्धा।
शीघ्रं प्रपेदे जनकस्य बाला जालावकाशं कुतुकेक्षणाय ।।70।।

मार्गे चिरण्ट्या[2] सहसा फलानि रसालशालस्य[3] सुधारसानि।
दत्तानि तानि प्रणता हसन्ती जग्राह सीता शुभसूचकानि ।।71।।

उक्तं तदेति द्विजराजपत्न्या कामास्त्वदीयाः सफलाः भवन्तु ।
तद्वाक्यपीयूषकबन्धधारा मोदानपारान् विदधुर्विदुष्याः।।72।।

सा [4]पुण्यगात्री जनकस्य पुत्री पुरः परं दीप्तिभरं ददर्श।
ततस्ततं श्यामरुचां समन्तात् पुञ्जं मणीनामिव रामचन्द्रम्।।73।।

---

1. काचिदितिशेषः, इत्यादर्शमातृकाऽभिधत्ते।
2. चिरण्टी=सुवासिनीत्यादर्शमातृका ब्रूते।
3. शालः = वृक्षः, इत्यादर्शमातृका स्पष्टयति।
4. रम्य, G.N.J., Pu.

श्रीरामचन्द्राननचन्द्रजात-पीयूषसिक्तान्तमरीचिजालम्।
पीत्वा सुतुष्टी च तदीयदृष्टी क्लान्तेऽपि[1] पुष्टिं परमाङ्गते ते।।74।।

सोऽयं प्रिये! दीनेदयेक्षणो यः स्वप्ने वितेने हृदि मे सुखानि।
अत्रान्यथा चेत् शपथाननेकान् कुर्वे सुपर्वेशपदाम्बुजस्य।।75।।

तापस्य शान्तिं कुरुतेऽस्य कान्तिः शरीरजाता पुनरीश्वरस्य।
धत्ते च बाहूयुगलस्य (शोभां क्षोभान्तराले कुरुते) तथैव।।76।।

स एव हासो वदनप्रकाशोऽप्यक्ष्णोर्विलासो रुचिरः स एव।
किं चित्रमन्यत्कथयामि द्वित्राश्चेष्टास्तथैवास्य तनौ प्रविष्टाः।।77।।

तस्या वयस्याः स्वकृतिप्रशस्यास्ताश्चाहितास्याङ्गुलयः सहास्याः।
जाताः सुमित्रा-वचनेन गोत्रा तनूभुवो रामनियुक्तनेत्राः।।78।।

पूर्वं प्रभाजालसमाकुलस्य श्रीरामचन्द्रस्य भुवस्तनूजाः।
नालोकने तस्य बभूव शक्ता तत्रानुरक्तापि निमीलिताक्षी।।79।।

अलौकिकं तत् परिलोक्य रूपं श्रीरामचन्द्राकृतिसम्प्रवृत्तम्।
जाता क्षणं भूमिसुता नतास्या भ्रान्त्यावृता सापि च विस्मयेन।।80।।

सम्भाषणे प्रेयसि! मानसेन्दोः वेदो न जानाति तदीयभेदम्।
कर्त्तुं सनाथानिह नाथहीनान् यातः स्वतः क्लेशहरो हरिः सः।।81।।

धातर्वरायास्तु नतिः कराय निःसीमकौशल्यकराकराय।
इयं कृता कापि हि येन मूर्त्तिः सीता हृतार्तिस्तमवेक्ष्य जाता ।।82।।

उवाच चान्तःशनवैरथोप्ता श्रीरामचन्द्राननचन्द्रदृष्टिः।
अकृत्रिमा भाति हि मूर्त्तिरेषा देशान् दिशां या कुरुते प्रकाशान् ।।83।।

[2]स्मृतं यदेतद् हृदि वर्णयुग्मं रामेति रामे हितमानसेन।
नो शक्यते तेन कृतः प्रमोदो वक्तुं किमस्याकृतिवीक्षणेन?।।84।।

विलोक्य रामं विकला किलामुं सीता प्रभीताऽवददानतास्या।
जाने वयस्येयमनङ्गपाशो नाशो यतो वीक्षणतोऽङ्गनानाम्।।85।।

---

1. ०न्ते च, G.N.J., Pu.
2. कौशल्यावचनमित्यादर्शमातृकाऽभिधत्ते।

[1]निरीक्ष्य रूपं रघुनाथजातं कान्तं परं यज्जगतां त्रयाणाम्।
[2]प्राप्ता विमोहं सहसा पतन्ती सीता कथञ्चिद् विधृता सखीभिः।।86।।

जगद्विमोहैकनिदानमेतत् श्रीरामचन्द्राकृतिजं हि रूपम्।
नानेतुमेषाऽत्र विदेहपुत्री योग्येति सर्वा अनुतापमीयुः।।87।।

अनीतिरेषा महती कृताद्य समाहृता यज्जनकेन्द्रपुत्री।
त्यजन्ति धीरा अपि धैर्यमत्ता को वात्र सीताविहितोऽपराधः?।।88।।

सीतामोहं समालोक्य दुःखैरुद्भ्रमिता सखी।
ददती दूषणं धातुरवदत् साश्रुलोचनम् ।।89।।

सन्दर्शितं कौशलमङ्गसर्वं वितन्वता श्रीरघुनाथरूपम्।
तद्वीक्ष्य जातः प्रमदाप्रतापो धातः! कुतः पातकजातघातः?।।90।।

कपोलयोर्वक्षसि नेत्रयुग्मे शिरप्रदेशे जनकात्मजायाः।
सेकं वितेने त्वरया च काचित् जलेन [3]वर्षोपलशीतलेन।।91।।

कर्णे विवर्णेक्षणसारसां तामुच्चैस्तरां प्रेयसि! जानकीति।
नामावलीं गद्गद्वागुदीर्य सम्बोधयामास सखी ततोऽन्या।।92।।

ददुः सुदुःप्राप्यपदस्य तस्य रामस्य मूर्त्तेरवलोकपुण्यम्।
सीताकरे स्वेदभरेणपूर्णे विचक्षणास्ता असुरक्षणाय।।93।।

कुतः प्रयातो रिपुरत्र रामो नामापि तस्यास्ति नमत्सुखाय।
किञ्चाप्यतो गच्छतु शीघ्रमेष क्लेषप्रदोऽस्या अवदद् विमूढाः।।94।।

भूयोऽवदत्सा रुचिरोऽपि रामो नास्य स्थितावस्ति हि मेऽद्य कामः।
स्वस्याकृतौ यद् विकृतिं करोति नैतत् कृती वाञ्छति भूषणं तत्।।95।।

वातैः सुशीतैर्व्यजनप्रसूतैः[4] कर्पूरपूराश्रितनीरसेकैः।
[5]किञ्चामलैः श्रीकमलैः प्रबालैर्मृणालजालैर्विदधुः प्रयोगम्।।96।।

---

1. विलोक्य, G.N.J., Pu.
2. सीता पतन्ती विधृता सखीभ्यां प्राप्ता विमोहं सहसा विचित्रम्।। इति पाठान्तरम्, G.N.J., Pu.
3. वर्षोपलस्तु करका, इत्यादर्शमातृका स्पष्टयति।
4. ०जातैः, G.N.J., Pu.
5. सीतां विनीतभ्रमसम्भ्रमां तां क्लेशेन चक्रुर्निचया सखीनाम्।। G.N.J., Pu.

जाने प्रयातोऽयममुत्र कालो दुर्ज्ञेयशीलः किल रामनाम।
अस्याः प्रशस्यायतलोचनायाः प्राणान् समादातुमवोचदन्या।।97।।

कल्याणमूर्त्तिः कुरुते शिवानि श्रीरामचन्द्रः स्मरतां जनानाम्।
दृष्टिं गतोऽयं जनकात्मजायास्त्राणं करोत्वद्य समूचुरन्याः।।98।।

उत्तिष्ठ सीते! पुरतः स्फुरन् ते समागतः सुन्दरि! रामचन्द्रः।
विलोकयामुं जलजेक्षणाभ्यां प्रोक्तं कयाचिद् वितथं श्रवाश्च।।99।।

[1]लब्धावबोधा परितोऽवरोधात् सञ्जातभीतिश्च न केन दृष्टा।
आवृत्य चैलञ्चलबालजालं सखीनिषिद्धाप्यगमद् गवाक्षम्।।100।।

[2]आलोकितः पूर्वमपूर्ववक्त्रो सम्पूर्णकामं नयनेन रामः।
नूनं करिष्ये सकलं वयस्ये! फलं विशालान्तरयोर्दृशोर्मे।।101।।

मा गच्छ सीते! पुनरद्य तत्र यत्रापदं त्वं महतीं गतासि।
कृत्वा करं दूरतरं वदन्त्या एवं रुदन्त्याश्च पुरः ससार।।102।।

सीते! प्रणामान् पदपङ्कजाय कुर्मस्त्वदीयाय वयं समस्ताः।
मा गच्छ वत्से! बहुभिः प्रयत्नैरुद्बोधितासीत्यवदन् पुनस्ताः।।103।।

किञ्चोत्तरं सुन्दरदन्तपङ्क्तिर्ददौ तनूजा जनकस्य तासाम्।
यद्भावि किञ्चिद् भवतु प्रियास्तत् पश्याम्यदः श्रीरघुनाथवक्त्रम्।।104।।

नो मे कुरुध्वं गमनावरोधमनर्थकारी भविताऽयमद्य।
रामेक्षणं प्राणहरं कदाचिद् ध्रुवं मृतिं दास्यति तद्वियोगः।।105।।

विधेयमाभिः किमु तत्सखीभिरालोकयन्तीभिरनर्थमेवम्।
तत्र प्रयाणे पुनरप्रयाणे प्राणप्रयाणे न हि संशयोऽस्याः।।106।।

मुक्ता सखीभिः रघुनाथभक्ता सीताऽतिसक्ता चरणावलोके।
त्वरापरा जालमबालनेत्रा चित्राकुला संविदधे प्रयाणम्।।107।।

---

1. जातावबोधा, G.N.J., Pu.
2. व्या०, G.N.J., Pu.

दृष्टः प्रहृष्टान्तरलोचनाभ्यां रामः सुधामस्सुमनोहरास्यः।
भासा समाक्रान्तदिशाप्रदेशः सखीसमालम्बितया तयाऽसौ।।108।।

किं कौतुकं हा! कथनीयमेतत् प्रिये! न कुत्राप्यवलोकितं यत्।
यदेव रामस्य विलोक्यतेऽङ्गं बद्धेव मे तिष्ठति दृष्टिरत्र।।109।।

प्रकुर्वतो रामशरीरमेतदपारसौन्दर्यसुधानिधानम्।
किञ्चित्करे नो भवतः प्रयातं जातं जने हा! हसितं विधेऽस्याः।।110।।

ब्रह्मण! कृतं श्रीरघुनाथरूपमनन्यसाम्यं जगतो हितं तत्।
तथाकृतं नो भविता सुधैर्यं सीतेति खेदात् पुनराह मन्दम्।।111।।

प्रियाः प्रियावः श्रवणस्य वार्त्ता श्राव्या पुरात्ताभिरलं मदर्त्या।
रामस्य कान्तं मुखचन्द्रमेतं निरीक्ष्य जातं मम हृत्सुशीतम्।।112।।

सम्भाषणं नैव कयापि किञ्चिन्मया विधेयं पुनराह सीता।
विलोकयामीन्दुसखं मुखं तत् रामस्य कामस्य करोमि पूर्तिम्।।113।।

शृण्वन्तु सख्यः सकलाः करोमि सम्प्रार्थनां वश्चरणे निपत्य।
मत्सन्निधौ तत्सुधया समानं रामाभिधानं न विना वदन्तु।।114।।

दूरे पुनस्तिष्ठतु लब्धिरस्य रामस्य दुःप्राप्य पदाम्बुजस्य।
करोति सद्यः श्रुतमेतदाद्य-वन्द्यस्य नामैव परं सुखं मे।।115।।

कान्तिर्यदीया [1]कुरुतेऽम्बरस्य प्रभाभरस्यालि! किलोपहासम्।
आलोकितं तद् रघुनन्दनस्य पदं मुदं मेऽतनुमातनोति।।116।।

आलोकितेऽप्यम्बुजपत्रनेत्रे श्रीरामवक्त्रे सुचिरं तथापि।
तृप्तिं मनो मे न समेति किञ्चिद् हा! हा! विधेयं किमु चाह सीता?।।117।।

शरीरमेतस्य पुरः परीतं प्रभाभिरातर्जितचन्द्रभाभिः।
आलोक्य रामस्य भवाभिभूयः प्रायः प्रिये! प्रेमसमुद्रमग्ना।।118।।

धृत्वा परं धैर्यममर्त्यवर्यं विलोकयामुं सुभगेऽद्य रामम्।
मुहुर्मुहुस्ताश्च बहुप्रभीताः सीताश्रुतौ मन्दतरं समूचुः।।119।।

---

1. कुरु कुङ्कुमस्य, Ujj.

अन्याऽवदद् भूमिसुतां स्मितेन सखी सुखामि तव लोचनान्ताम्।
भर्ता तवायं भविता स्मितास्या पुनर्ददौ दृष्टिममुत्र हृष्टा।।120।।

[1]को वैवमद्यामलवाक्प्रचारे कर्त्ता सुराणां भविता वरेण्यः।
उक्त्वा स्त्रवल्लोचननीरलेशा भूयः प्रतोषा दृशमत्र द्रध्रे ।।121।।

स्वीयप्रभानिर्जितभास्कराय कर्णान्त-विश्रान्तविलोचनाय।
रामाय कामाधिकसुन्दराय चक्रे नमः सा पुरुषोत्तमाय।।122।।

आरभ्य तस्याङ्घ्रिनखात्[2] सुखेन किञ्चित् समाकुञ्चितलोचनान्ता।
पपौ च पौरैः[3] परितो वृतस्य रामस्य सीता सकलं शरीरम्।।123।।

सखीं [4]पुनः प्राह कृताहशब्दा रामस्य दृष्ट्वा [5]सकलं शरीरम्।
येनेक्षितं नैव वपुः कदापि नेत्रेण मात्रे स भवेत् श्रमाय।।124।।

चित्ते मदीये कथमालि! भाति रामस्य शोभा- परिवर्णनेषु।
लभेत मूकत्वमसौ विधाता जाता न केचित् सुधियस्ततोऽन्ये।।125।।

आकारिताऽऽगत्य गृहं त्वयाऽहं दास्यामि देहं यदि ते नतेन।
प्रत्यर्पणं स्यादुपकारकृत्ये वदामि सत्येन वचो वयस्ये!।।126।।

भवो भवानीपतिपादपद्म-निषेवणोपार्जितपुण्यपुञ्जैः।
कृतः कृतार्थः सकलागमार्थः साक्षान्मयाऽदर्शि स राघवार्थः[6]।।127।।

न ज्ञायते किं विहितं प्रिये मे विलोचनाभ्यां सुकृतं पुराभ्याम्।
याभ्यामयं पुण्यमयं च कायं रामो दधानः स विलोक्यतेऽद्य।।128।।

श्रीरामसम्मोहितमानसा सा सीता सखीमाह विहाय लज्जाम्।
विधेयमस्याङ्घ्रियुगस्य दास्यं हास्यप्रभानिर्जितपङ्कजस्य।।129।।

---

1. क एव०, G.N.J., Pu.
2. नरवं, G.N.J., Pu.
3. पौराक्षिमहोत्सवस्य, G.N.J., Pu.
4. च सा, Ujj., I.O.
5. परितः, G.N.J., Pu.
6. रामचन्द्रः, G.N.J., Pu.

स्मृत्वा पणं नीरकणं दृशोः सा सम्प्रेरयन्ती विदधे विचारम्।
क्वायं स्वयं कोमलकान्तगात्रो गोत्रोन्नतं[1] क्वेदमुमेशचापम्?।।130।।

तातस्तु जातः सखि! मेऽद्य वैरी कुर्वेऽद्य गौरीशपदं प्रमाणम्।
तस्यैव वाणी विलसत्कृपाणी धारानुकारा हृदिदं तुदन्ती।।131।।

कया कृतः स्यात्तपसां समूहो देहे समीहामपि संविहाय।
दास्यं पदस्यास्य विधास्यते या सीता सखीमाह पुना रुदन्ती।।132।।

विलोक्य रामं नयने कृतार्थे जाते समर्थेन वृषोच्चयेन।
मनो मनोभूज्वलनोग्रकीला मालाभिरालि! क्रियतेऽक्रियं मे।।133।।

ददातु वाऽसौ पणभङ्गजातं मह्यं नितान्तं गुरुपापजातम्।
तस्मान्न भीतिः सखि! कापि पापी रामात्सदापीशत एतिशुद्धिम्।।134।।

जानीहि सत्यं मम वाच्यसत्यं कदापि यातं न वचो वयस्ये!।
सक्तं मनो रामपदारविन्दे नैवात्र सन्देहकलापि किञ्चित्।।135।।

विधाय मौलिं पदपङ्कजेऽस्य कुर्वर्थनामालि! मदीयनाम्ना।
त्याज्यः पणः पापकणोऽपि न स्याद्यतः पितः! श्रीरघुनाथलाभः।।136।।

त्यक्ता महद्भिर्महती च लज्जा रामाङ्घ्रिकञ्जाश्रयजातलोभैः।
का वा मदीया गणना वयस्ये! गच्छाशु शस्ये! प्रणतिः तवापि।।137।।

किञ्च प्रिये! त्वं वद तं हि सत्यं नैवास्ति कृत्यं त्रपयाऽधुना मे।
लभ्यो मया स्याद् यदि नैष रामो भावी विरामो मम जीवितस्य।।138।।

पिता कृतागाः[2] सखि! दूरतोऽस्तु प्रयोजनं नैव ममाद्य तेन।
अहं करिष्ये स्वयमेव गत्वा नत्वा च रामाङ्घ्रिसरोजसेवाम्।।139।।

यस्यास्ति कृत्यं सखि! राघवस्य किं वा करोत्यस्य जनापवादः।
माता पिता बन्धुजनो जनो वा सखा सुहृद् वाऽप्यहितो हितो वा।।140।।

---

1. ०दयं, G.N.J., Pu.
2. आगः = अपराधः, Ujj.

श्रुतं मयाऽपीह पुरा पुराणे [1]सुरासुराचारविचारसारे।
विहाय देवानपि देवदेवः सदैव सेव्यः सखि! रामचन्द्रः।।141।।

समाश्रये रामपदाम्बुजस्य कस्यापि केनापि कदाप्यनुज्ञा।
नोपेक्षणीयेति वदन्ति सुज्ञा अज्ञानरोगापनयैकविज्ञाः।।142।।

किं जायते जानकि! सर्वमग्रे! तद् वै समग्रेन्दुसमानवक्त्रे!।
विलोकयादौ रघुनाथ-पादौ गम्यौ कुतो दौस्थ्यमिति प्रियाह।।143।।

अथोपविष्टो मुनिरासनेऽसौ सभागृहे भूपतिना प्रदिष्टे।
रामप्रभानिर्जितभूपवृन्दे सन्देशमेवं जनके चकार।।144।।

इच्छामि तच्छायमनङ्गशत्रोश्चापं नृपावेक्षितुमस्ति रामे।
यच्चालने भूपतिवृन्दमेतद् वीतोत्सवं जातमनन्ततेजः।।145।।

वाक्यं तदेतत्सहसा सुमित्रे! लेभे सुमित्रेण समानभावम्।
भ्रमातुराया अवलम्बनाय प्रायो विदेहाधिपतेः सुतायाः।।146।।

सम्प्रेरिता भूपतिना बदलाढ्याः[2] कष्टादिहानिन्युरपेतसंख्याः।
शरासनं यन्निहितं शिवेन गेहे विदेहस्य महाप्रमाणम्।।147।।

तद् वीक्ष्य चापं प्रखरप्रतापं रामं प्रपेदे सखि! वीरलक्ष्मीः।
यया समीयुर्मुखपङ्कजानि सम्पश्यतामुल्लसनं जनानाम्।।148।।

सम्प्रेरितः श्रीमुनिना प्रणामान् विधाय तस्याङ्घ्रियुगेऽप्यनेकान्।
वासः कटौ कण्ठगतं निबध्य दन्तीव रामश्चलितः सचापम्।।149।।

[3]सर्पः यथा सर्पति भूरिदर्पः सर्पारिरीशो रधुराजराजः।
तथा कथानन्दितसर्वलोकश्चापः प्रिये! पञ्चमुखस्य जातः।।150।।

[4]यदा मुदाऽसौ धनुषः समीपं श्रीरामचन्द्रः प्रहसन् जगाम।
मनोविनोदेक्षणसादराणां साकं च तेन त्वरया नराणाम्।।151।।

---

1. सुराश्च असुराशच आचारश्च तेषां विचारस्तेन सारमित्यादर्शमातृका स्पष्टयति।
2. बलिष्ठाः, G.N.J., Pu.
3. अधिकः पाठः, G.N.J., Pu.
4. अधिकः पाठः, G.N.J., Pu.

उद्दीश्य मामद्य वदन्तु लोकाः प्रिये! प्रियं वाऽप्रियमेव सर्वे।
सन्तः प्रशंसन्त्वथवा हसन्तु जातं रतं रामपदे मनो मे।।152।।

पदारविन्दं रघुनायकस्य विलोकयन्ती प्रियता रसेन।
पप्रच्छ सीतां कुतुकेन काचित् कीदृक् सुखं जानकि! जायते ते?।।153।।

तामाह सीता सखि! मानसं मे नैतत्क्वचिद् गच्छति न प्रयाति।
चिन्तां रघूत्तंसपदाम्बुजस्य कुर्वन् पुनर्मज्जति चात्र चित्रम् ।।154।।

बालोऽपि कालो धनुषः स रामो भूमीं[1] परामोजस आससाद।
यां वीक्ष्य चाक्ष्णामभवंश्च पक्ष्मान्यलं नृपाणां मिलितान्तराणि।।155।।

किं हा! करष्यित्यधुना महेशः सम्पूरिताशः शरणागतानाम्।
इत्यातुराया दुहितुर्धरायाः स्फुरद् [2]वरायाऽभवदक्षिवामम्।।156।।

उद्दीश्य चापं चलतः पदानि रामस्य सर्वाणि विदेहपुत्र्याः।
दुःखातुराया हि मुदः परस्यास्तान्येव जातानि तदा पदानि।।157।।

वक्त्रं समीक्ष्यैव रघूत्तमस्य मन्दं समूचे [3]तनयाधरायाः।
दास्यं करिष्ये सततं निकामं देवेश! सम्पूरय मेऽद्य कामम् ।।158।।

सिद्धेऽभिलाषे जनपूरिताशे मातर्जनेशे दयिते [4]भवस्य।
[5]पूजां करिष्यामि परां त्वदीयां सीतैवमुक्त्वा प्रणनाम साङ्गम्।।159।।

धर्मं विना सिद्धिरपेक्षितानां सञ्जायते नैव परापराणाम्[6]।
आर्या विचार्य[7] प्रददावपूर्वं यच्चापि सर्वं वसु भूसुरेभ्यः।।160।।

---

1. मिः परस्याः प्रबभूव कान्तेः, Ujj., I.O.
2. रलयोरैक्यमित्यादर्शमातृका स्पष्टयति।
3. जनकस्य पुत्री, G.N.J., Pu.
4. शि०, Ujj., I.O.
5. सेवां, G.N.J., Pu.
6. ०रेषाम्, Ujj., I.O.
7. ०र्यादित एव सर्वं ददौ द्विजेभ्यो गिरिजां विचिन्त्य, G.N.J., Pu.

भूषा अशेषा मणिरत्नकोषा ये ये विशेषा द्रविणस्य सर्वे।
समानय प्रेयसि ! वेगतस्तत् दास्यामि तुष्ट्यै शिवयोर्द्विजेभ्यः।।161।।

रामस्य लब्धौ किल पूर्णकामा नैवास्ति कृत्यं द्रविणेन किञ्चित् ।
तस्याप्यलब्धौ हतसर्वकामा नैवास्ति कृत्यं सखि! केन किञ्चित् ।।162।।

अयं जयं यातु सरोजनेत्रो यत्रोदयस्तिष्ठति हाऽखिलानाम् ।
एवं निनादैः परितः सुराणामाकाशमप्याकुलितम्बभूव ।।163।।

रसा समन्तात्सरसाङ्गयष्टिर्दृष्टिङ्गते भर्त्तरि पुत्रिकायाः।
हर्षप्रकर्षोल्लसदन्तरा सा बभूव कुल्योच्चलदम्बुदम्भात् ।।164।।

रामो रमेशः क्षितिजा रमेयं यत्राप्रमेयं स्फुटमेतदोजः।
वेधा विधास्यत्यनयोः प्रयोगं प्रोचुश्च योगम्विद एवमेव ।।165।।

आकाशदेशेऽपि गिरो विचेरू रामो विभङ्गं धनुषोऽद्य कर्त्ता ।
त्वया विधेया सुभगे! न चिन्ता त्वमस्य कान्ता भविताऽद्य नूनम् ।।166।।

नैतद्वचः किन्त्वमृतस्य वृष्टिः सद्यः प्रपुष्टिं वपुराप तस्याः।
किञ्चाप तुष्टिं हृदयं तदीयं बभूव [1]भृष्टिर्बहुवेदनानाम् ।।167।।

सर्पः यथा सर्पकुलस्य वैरी नम्रीकृतारी रघुराजराजः।
तथा कथानन्दितसर्वलोकास्तोकाकृतिस्तद्धनुरुद्दधार ।।168।।

चित्रं सुमित्रे! शृणु रामगात्रे मित्रेण साम्यं प्रगते प्रभाभिः।
लोकाः पुरस्था अभवन् सुदुस्था विलोकनास्थारहिताश्च सर्वे ।।169।।

हासो भूमिसुतामुखे शतमखे भूयात् सुखेनोद्भ्रमो
लज्जा भूपकुले तलेऽपि च भुवः कोऽप्युत्सवः पश्यताम् ।
आश्चर्यं मिथिलापतेश्च हृदये प्रायो बभूवोद्घृते
चापेनादरतः करेण सहता रामेण गौरीपतेः ।।170।।

स्पृष्टं यदा रामकेरण दृष्टं तद् वज्रपृष्ठं धनुरीश्वरस्य ।
जाते पुनस्तत्सकले कलेयं कुत्रापि दृष्टा न हि लाघवस्य ।।171।।

---

1. भृष्टिः = भर्जनमित्यादर्शमातृका स्पष्टयति।

[1]कूटोच्चकोटिपविकक्खटनीलकण्ठ-
कोदण्डदण्डपरिखण्डनचण्डनादः ।
ब्रह्माण्डभाण्डजठरान्तरमेव भित्वा
दूरे ततोऽपि परितो बहिरुत्ससार ।।172।।

भङ्गादनङ्गारिशिरासनस्य जातं महान्तं भयदं निनादम् ।
श्रुत्वाऽद्भुतं तत्सदने स्वकीये ब्रह्मापि जिह्माकृतितामवाप ।।173।।

शेषः क्लेशमलङ्गतोऽति-भवतः कम्पावृतः सर्वतः
कुर्वन् संवृतिमेव लोचनचये ब्रह्माण्डखण्डभ्रमात् ।
आशावारण-वारणं प्रचलतात् सन्धारणं यत् क्षिते-
रेवं शैवधनुःप्रभेद-निनदे जाते दिगन्तेष्वभूत् ।।174।।

शक्रो वक्रतनुः पिधाय भयतः कर्णौ विवर्णाकृतिः
पाणिभ्यां प्रवदन् सगद्गदगिरा यश्चामराणां पतिः।
हा! हा! किं भविता ममाद्य पतनं स्वर्गात् स्ववर्गैरहो!
रावात् शाम्भवचापभेदनभवाज्जातो न चातोऽद्भुतम्?।।175।।

जातायाप्यचला तदा किल चला प्रोद्यत्तलाश्चाचला
विष्वक्त्रस्तजलावलुप्तविधुलादेषा अशेषाब्धयः।
किञ्चोद्विग्नमनो जनोऽपि विदधे हाहेति कोलाहला-
नेवं चित्रमनङ्गशात्रवधनुर्भेदध्वनावप्यभूत्।।176।।

तत्कौतुकं भूमितलेऽखिलेऽभूद् भूतेशबाणासनभङ्गनादात् ।
आर्त्ता मुहर्त्तं सकलाश्च मर्त्त्या जाताः स्वकृत्याचरणेषु मूढाः।।177।।

स गाधिपुत्रोऽप्यपतद् विचित्रं गोत्रातले निश्चलनेत्रगात्रः।
गतः स्मृतिः संस्मृतरामनामा [2]कम्पाकुलाङ्गप्रचयस्तदानीम्।।178।।

पुर्य्यां मैथिलभूपतेर्निवसतां किं देहिनां तत्क्षणे
न स्यात् प्राणविनिर्गमोऽपि वपुषस्तच्चापभेदाद्रवात् ।

---

1. कूटवत् उच्चा कोटिर्यस्य पविः वज्रं तद्वत् कक्खटं कठिनं, नीलकण्ठकोदण्डमित्यादर्शमातृका स्पष्टयति।

2. कम्पाकुलाङ्गो भयसंभवेन, G.N.J., Pu.

नूनं स्वाश्रितवज्रपञ्जरविभु-श्रीरामपादाम्बुज-
द्वन्द्वस्यैव बभूव कोऽपि महिमा संरक्षणे कारणम् ।।179।।

स्वस्थाः स्वस्थहृदः क्षणेन सकला विज्ञातरामक्रिया
याताश्चान्तरतोऽम्बरस्य परितो रोमाञ्चिताङ्गा मुदा ।
कृत्यं दाशरथे! कृतं भगवता नैतत् कृतं केनचित्
पूर्वं सर्वजनाश्रयाय नतयस्तुत्यं तमूचुर्नताः।।180।।

केनाप्यदृष्टः सहसैव धृष्टस्तिष्ठन् वशिष्ठो मरुतां स तुष्टः।
अग्रे पदोऽव्यग्रमना घनास्त्रः प्रोवाच रामाधिपते प्रणामाः।।181।।

मन्दं कथं नो विहितोऽस्य भङ्गश्चापस्य रामस्य महोदयस्य ।
नाकेऽप्यनेकेऽविबुधा बुधाश्च जाता ममैतद्रवतोऽवदत्सः।।182।।

धिक् तन्नो बलमायतां विपुलतां धिक् पीनयोर्बाह्वयो-
र्धिक् तेजः किल कायजं तरुणतां धिग् धिग् जनुर्बाहुजात् ।
धिक् श्रैष्ठ्यं नृपताञ्च धिग् यदमुना बालेन तुच्छीकृताः
प्रोद्यत्श्वासभरं रुदन्त इति ते तस्थुर्नतास्याः नृपाः।।183।।

शस्त्रेणोदरघातनाय कतिचिद् दुःखात्प्रवृत्ताः पुन-
स्तेऽप्यन्यैः करयोर्धृता न हि हिता हत्या निजस्यात्मनः।
रामोऽनेन [1]समादृतस्त्वितिकृधा हन्तुं गताः कौशिकं
मूर्खाः केचिदलं ज्वलन्त इति तज्जातं परं[2] कौतुकम् ।।184।।

ऊचुः केचिदुदञ्चिताश्रुनिचयं भूपा नृपाणां पुर-
स्सर्वं जातभरं परन्तु नगरं नैवाद्य यामः स्वकम् ।
गत्वा किं वनितास्त्रपाभरनता यास्यन्ति नैवाग्रतः
कालः किं न करोति तेऽपि विदधुस्तेषां शनैः सान्त्वनम् ।।185।।

केचिच्चोच्चलिता महागजमिव श्रीरामचन्द्रं नृपाः
कुर्वन्तः परितो वृथैव शुनकाः कोलाहलं दूरतः।

---

1. समाद्धतस्थिति॰, G.N.J., I.O.
2. महा॰, G.N.J.

[1]कस्मात् पञ्चमुखस्य चापमलघुच्छिन्नं त्वयाऽसन्मते!
नूनं बालक-चापलं तव बलं प्रोचुर्विमूढाः पुनः।।186।।

आहोत्पत्य पितामहोऽप्यतिमहोदञ्चत्सहो विग्रहो
भूरिप्रेमरयान्वयाऽस्फुटवचाः साङ्गं नतः पादयोः।
पाहि त्वं विजयं द्विषां समुदयं शीघ्रं निहत्याभयं
कुर्वानन्दचयं स्वयञ्च जगतां श्रीराम! रामेति च ।।187।।

केचिन्नृपालाः कुटिला विडाला इवान्तरालाश्रितमार्गदेशाः।
उद्यत्पुटं भोगिभटं निरीक्ष्य रामं दधुर्गुर्गुररावमन्तः।।188।।

कृत्वा कृत्यमपेतसाम्यमपि तत्सङ्गच्छतो बालवत्
कर्त्तुं वन्दनमुन्मदाय मुनये रामस्य रामप्रिया।
लज्जाकुञ्चितलोचनेक्षितमुखप्रान्ता सुवाद्यावलि-
ध्वानौघेऽम्बरगे स्रजं पृथुतले हर्षाद् गले सन्दधे।।189।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजका-*
*चार्यवर्यदिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपाद-*
*शिष्याद्वैतविरचिते 'धनुर्भङ्गो' नामाष्टमः सर्गः।।*



1. एतत्, Ujj, I.O.

# नवमः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ।।1।।

सन्तोषनादः सदने शिवस्य नास्ते रमेशस्य च वेधसोऽपि ।
आलोक्य तां देवकृतिं [1]विचित्रामासीदलं यो भुवने नृपस्य ।।2।।

बालोऽपि शालः प्रभया विशालः श्रीसीतया सल्लतयाऽद्य लब्धः।
एवं प्रतिस्त्रिप्रतिपूरुषञ्च[2] प्रत्यर्भकं तोषभरा रवोऽभूत् ।।3।।

चिन्तासमुद्रान्तरमग्नसीता चेतः समाकर्षण-नाविकस्य ।
सख्यो वितेनुः रधुनन्दनस्य नीराजनं बाहुयुगस्य दीपैः।।4।।

वृद्धाः प्रसिद्धा अपि ये च सिद्धा बद्धान्तरा रामपदे समूचुः।
सीतामनस्तापविनाशचन्द्रः श्रीरामचन्द्रः सुखमे (?) नयैतु ।।5।।

नाके च साकेतपुरेश्वरस्य रामस्य कर्माभिनवं निरीक्ष्य ।
चक्रुर्मुदा स्वःप्रमदाः सगीतं नृत्यञ्च देवाः पृथुवाद्यनादान् ।।6।।

रसा समन्तात्सरसाङ्गयष्टिर्दृष्टिङ्गते भर्त्तरि पुत्रिकायाः।
हर्षप्रकर्षोल्लसदन्तरा सा बभूव [3]कुल्योच्चलदम्बुदम्भात् ।।7।।

---

1. जनानामासीत्पुरे सोऽत्र, Ujj., I.O.
2. ०षं भृषं, G.N.J., Pu.
3. कुल्या = कृत्रिमा सरिदित्यादर्शमातृका स्पष्टयति।

रामं प्रणामं चरणे विधातुं यातं पुरो [1]भूतनयासमेतम् ।
मालालसत्कण्ठतलं प्रमोद-सन्नद्धरोमा मुनिरालिलिङ्ग ।।8।।

मुञ्चामि नामुं [2]क्षणमद्य रामं सर्वे निकामं सदनं [3]प्रयान्तु ।
सीतैवमुक्त्वा[4] दधती तमङ्गे रङ्गे स्थितानां कुतुकानि तेने ।।9।।

आकृष्यमाणोऽपि करे करेण श्रीरामचन्द्रेण जगद्वरेण[5]।
नामुञ्चदेषा कृपणेव योषा क्लेशादवाप्तं परमं हि रत्नम् ।।10।।

करोतु किं हा! तनुजो मदीयो महाजनानाञ्च गुरोः पुरोऽपि[6]।
किञ्चित्स्मितोल्लासि [7]मुखाम्बुजोऽसौ प्राप त्रपामेव परां सुमित्रे! ।।11।।

कृतप्रणामां मुनये करेण धृत्वा सुतामुन्मुदिताननां ताम् ।
हसन् विदेहो निजगेहमध्यं समानयत्संस्तुतभागधेयाम् ।।12।।

मात्रा धृतालं हृदयेन सीता स्वीये नता पादयुगे कराभ्याम्[8]।
सौख्यं चिरं त्वं दयितेन साकं कन्ये! लभस्वाशिषमुच्चचार ।।13।।

विलिख्य पत्रं जनको निजेन करेण सन्तोषनिमग्नचेताः[9]।
सम्प्रेषयामास मनोहरार्थं सत्कुङ्कुमाङ्कं[10] रघुनाथपित्रे ।।14।।

कुर्वन् निजे चेतसि राघवस्य चिन्तामनन्तामपि लक्ष्मणस्य ।
नासौ सदा दीनमुखः सुखस्य लेशं धरेशोऽस्पृशदस्तसर्वः।।15।।

---

1. ०सुतया, G.N.J., Pu.
2. प्रिय०, G.N.J.
3. सदनानि यान्तु, Ujj., I.O. G.N.J.
4. ०क्ता, I.O., Pu.
5. मनोहरेण, Ujj., I.O.
6. समीपे, G.N.J.
   पुरस्तात्, Pu.
7. मुखं तदानीं, G.N.J.
8. करेण, Ujj.
9. सन्तोषसमेत०, G.N.J., Pu.
10. सत्केसरा०, G.N.J., Pu.

दूतो नतः पादयुगे नृपस्य वदन् मुखेनापि मुदा तदर्थम् ।
पत्री विदेहेन पदा नतेन दत्तेति तामस्य पुरो दधार ।।16।।

कृतावधानं हृदये निधानं सन्तोषपीयूषरसाकराणाम् ।
तत्पत्रिकार्थं शृणु वाच्यमानमानन्दकन्दाकृतिना नृपेण ।।17।।

श्रीपुत्रिणे दशरथाय धराधिपाय
निःसीमदैवनिलयाय जगच्छ्रुताय ।
भूमीतलाश्रितशिरः परयाङ्घ्रि भक्त्या
दासः प्रणामनिचयान् कुरुते विदेहः।।18।।

रामेणाद्भुतविक्रमेण धनुषो भङ्गः कृतः शूलिन -
स्तत्पादाम्बुजसेवनाय च मया सीता सुता साऽर्पिता ।
कृत्वाऽनुग्रहमङ्घ्रिदास्यनिरते मय्याशु वैवाहिकं
कर्त्तुं कृत्यममर्त्त्यगेययशसाऽऽयातव्यमेषाऽर्थना ।।19।।

नाथो धरित्र्याः स च साधुपत्र्याः[1] सम्प्रेषिता या मिथिलाधिपेन ।
अर्थं परिज्ञाय जनुः[2] कृतार्थं सम्भावयामास[3] निजं जनेषु ।।20।।

पृष्टे[4] धराया अखिले वशिष्ठः शिष्टस्ततोऽन्यो गणको न दृष्टः।
जातं तदुक्तं सकलं हि सत्यं प्रत्यङ्गनां[5] रामपिता जगाद ।।21।।

कृताः समन्तात्पुरावासिलोकैस्तदैव[6] सन्तोषपरिप्लुताङ्गैः[7]।
संसूचिकायाः परमोत्सवानां गृहे गृहे मङ्गलकेतुमालाः।।22।।

चक्रुः समस्ता विभवैः प्रशस्ता लोकाः प्रवेकान् विविधांश्च धर्मान् ।
अगण्यमेतत् क्षितिपालपुण्यमेवं वरेण्याश्च पुरे समूचुः।।23।।

---

1. सुभगः सपत्न्याः, Ujj.
2. जनुः = जन्म इत्यादर्शमातृकाऽभिधत्ते।
3. तदात्ममानीज्जगति स्वकीयम्, G.N.J., Pu.
4. तले, Ujj., I.O.
5. भूयोऽपि भूयो वद देवमीशः, G.N.J., Pu.
6. ०दपि सर्वलोकैस्तदैव, Ujj., I.O.
7. ०निमग्नचित्तैः, G.N.J., Pu.

सेना-[1]सनेनास्त्ववनीतलेशः प्रादाय वाद्यध्वनिपूरिताशः।
वीरैः समारूढविचित्रवाहैः सारैकगेहैर्मिथिलामयासीत् ।।24।।

दारा उदारा नरनायकस्य हारावली-भूषणभूषिताङ्गाः।
आसाद्य सर्वे शिविकान्तराणि हर्षाद् हसन्तः[2] प्रययुः पुरस्तात् ।।25।।

अभूत्तदा यो हृदये मदीये श्रीरामचिन्ताप्रयतान्तराले[3]।
[4]हर्षोच्चयः प्रेयसि! तस्य पारं वक्तुं किलाहं न कदापि शक्ता ।।26।।

अथाधिराजो मिथिलानगर्य्याः सूर्यान्ववाय-प्रभवं नृपालम् ।
श्रुत्वाऽऽगतं तं सह सेनयाऽसौ पुरः सहर्षं पुर आजगाम ।।27।।

रामोऽपि धामोच्चय एव साक्षात्सहानुजेन प्रमदेन पूर्णः।
सन्दर्शनार्थं जनकस्य तूर्णं [5]सम्पूर्णभाग्योदय जामदग्ने:।।28।।

[6]दृष्ट्वा निजौ तौ तनुजौ सुमित्रे! भूपस्य गात्रे सहसा प्रमोदात् ।
रोमोद्गमोऽभूत्सलिलस्य धारा दृशोरपाराः परितोऽपि पेतुः।।29।।

उत्प्लुत्य वाहाद् बहुसम्भ्रमेण सुधाप्लुताङ्गाविव तौ तनूजौ ।
अलं जलं लोचनतः सुखेन मुञ्चन् नृपोऽधाद् हृदयेन गाढम्[7]।।30।।

धृतौ पुनस्तावुरसा रसाया नाथेन गाढं युगलेन दोष्णोः।
असौ सुखाम्भोनिधिमग्नचेता नेता भुवोऽभूत् क्षणमस्तचेष्टः।।31।।

यदोदयं यान्ति नरेऽपराणि पापानि संसारशतार्जितानि ।
भवेद् वियोगो[8] विधिनोज्झितस्य श्रीरामचन्द्रेत्यवदद् रुदन् सः।।32।।

---

1. ०म०, G.N.J.
2. ०न्तोऽप्यगमत्पुरस्तात्, Ujj., I.O.
3. ०विमलान्तराले, Ujj., I.O.
4. सुखोच्चयः, G.N.J.
5. सेनाभरेणापि ययौ परेण, G.N.J., Pu.
6. पुत्रौ सुमित्रे क्षितिपेन दृष्टौ सृष्टौ विधात्रा किमु तोषरूपौ?।
   एवं तदा कल्पितमन्तराले हृदो मुदोदञ्चि तनूरूहेण।। – इति पाठान्तरम्, G.N.J., Pu.
7. हार्द्रात्, Ujj., I.O.
8. ०गस्तव मानवस्य Ujj., I.O.

[1]जाने कृतं किं सुधयाऽस्य गात्रं प्रायः पवित्रं जलतोऽपि गाङ्गात् ।
यत्सङ्गमात्राद् वपुषो मदीयात्तापातिपापे गत इत्यवादीत् ।।33।।

उत्सार्य हस्तावपि तौ मयालं दृग्भ्यां जलं प्रेमभरैस्त्यजन्त्या ।
आलिङ्गितौ पङ्कजशीतगात्रौ पुत्रौ सुमित्रे! सुकृतोच्चयेन ।।34।।

स्त्रियः स्वयं हर्षचयं नृपस्य प्रापुर्वपुस्तद्रघुनन्दनस्य।
आलिङ्ग्य शीतांशुकरातिशीतं कान्तं परीतं शुचिता गुणेन ।।35।।

धावन् विदेहः पुरतः प्रयातः कर्त्तुं [2]प्रणामान्नृपतेः पदाय ।
तावद् धृतोऽसौ हृदयेन तेन सन्तोषहासोल्लसिताननेन ।।36।।

सुखोपविष्टा नरनायकेन सत्रा[3] च गोत्रापतयः समस्ताः।
क्षौमासनेषु प्रथमं वितेनुः प्रश्नान्मिथस्ते कुशलानुवृत्तेः।।37।।

राजाविदेहः परिपूरितेहः [4]संक्षीणमोहः क्षतदेहदेहः।
हसन् लसच्छ्रीभरपूरिताङ्गः प्रोवाच साकेतपुराधिराजम् ।।38।।

इयं पुरी मे नगरी धुरीणा रीणाखिलाघौघजनाश्रयाश्च ।
अद्यातिवन्द्यानि पदानि विष्णोः श्रीरामचन्द्रस्य वसन्ति यस्याम् ।।39।।

किञ्चाद्य सर्वे त्रिदिवेऽपि पूर्वे कुर्वन्ति वासं नृपते! मदीयाः।
नो लभ्यते केन रजः पदस्य स रामचन्द्रः पतिरङ्गजायाः।।40।।

यो रामचन्द्रस्य गुरुः पुरूद्यच्चन्द्रप्रभानिर्मलकीर्त्तिजालः।
साकं सुहृत्ताननु तेन जाता राजन्! विधेरस्ति न मेऽद्य पारः।।41।।

किञ्चिद् विरामे वचनस्य तस्य सति प्रवीणो वचनप्रचारे ।
हर्षप्रकर्षं जनकस्य कुर्वन् [5]सर्वेशतातोऽपि सुखादवोचत् ।।42।।

---

1. नूनं, G.N.J., Pu.
2. प्रणामं नृ०, G.N.J., Pu.
3. साकं नृपालाः सुरनाथलीलाः, G.N.J., Pu.
4. सर्वैः पदार्थैः परमेश्वरेण, G.N.J., Pu.
5. श्रीरामतातेऽप्यवदत्सुखेन, G.N.J., Pu.

पूर्वैरपूर्वं सुकृतं मदीयैः प्रायः कृतं तस्य भवेद् विपाकः।
अयं चयं येन महासुखानामहं व्रजामीड्यगुणा[1] गणेयम् ।।43।।

जाता सुता मे स्थविरस्य [2]यत्नैर्ये सर्वदिक्पालसुभालभूषाः।
अयं तु रामः सततं स्मरामः साधूदितं दैवतदैवतं हि ।।44।।

वंशावतंसो भवतां हि वंशो लोके यशो यस्य परं प्रकीर्णम् ।
तत्सम्भवेनापि च [3]हार्द्रमेतन्नातःपरो धन्यतरो नरोऽन्यः।।45।।

एवं निशम्योत्तरकोशलानामीशस्य वाक्यं जनकः क्षितीशः।
सन्तुष्टचेता विनयप्रवीणो दासोऽहमेवं बहुशो जगाद ।।46।।

वस्त्रैर्विभूषानिचयैस्सुपूजां[4] कृत्वा तनूजै रविवंशजस्य ।
वासाय गेहानि मनोहराणि दिदेश देशाधिपतिः पुरान्ते ।।47।।

आज्ञां गृहीत्वा सकले प्रयाते भूपालवृन्दे निजमन्दिराणि ।
राजाऽविशद् राजगृहं विदेहः स्नेहादृतः सत्वरमङ्गजायाः।।48।।

उत्कण्ठितो[5] भानुकुलप्रसूतो राजा गृहीत्वा परमोपहारान्[6]।
[7]पुत्रैः पवित्रैः[8] सकलैः कलत्रैरगान्मुदा कौशिकवन्दनाय[9]।।49।।

[10]स चोपविष्टं कुशविष्टरान्ते वातायुचर्माम्बरसंवृत्ताङ्गम् ।
नामानि रामस्य जपन्तमाद्यमुद्यत्तनुं तं मुनिमन्वपश्यत् ।।50।।

---

1. ०णाऽगणो यः, G.N.J.
   ०यशो निशेष?, Pu.
2. चैते ये, G.N.J., Pu.
3. सौहृदाप्ति र्ना०, Ujj., I.O.
4. ०येन पूजां, G.N.J., Pu.
5. ०तोऽलं सह तैस्तनूजैः, G.N.J.,
6. विविधोपचारात्, G.N.J., Pu.
7. प्रायः, G.N.J., Pu.
8. ०रपि तैः, Ujj., I.O.
9. ०दर्शनाय, G.N.J., Pu.
10. राजो०, G.N.J., Pu.

अङ्गैरथोच्चैः प्रपतद् धरायां[1] पतिर्भुवः संविदधे प्रणामान् ।
पुत्रैः कलत्रैरपि मित्रवर्गैः सत्रा पवित्राचरणाय तस्मै ।।51।।

पीठे कुशानां मुनिना प्रदिष्टे कृतोपवेशं नृपतिं स तुष्टः।
कृतिं समस्तां रघुनन्दनस्य[2] सशंस [3]रामाङ्घ्रिमना अनादेः।।52।।

रामेण नीता हरिणाऽरिणा ते निशाचरा घोरतरा विनाशम् ।
नैतन्महाराज! विभाति चित्रं मित्रं पुनस्त्वां कथयामि चान्यत् ।।53।।

रामस्य नामान्यतिमञ्जुलानि नानामहापाप-निकृन्तनानि ।
प्रेम्णा परेण प्रवदन् सहर्षं कोऽप्येव कालं कलयत्यशेषम् ।।54।।

सङ्गतिं परिविहाय जनानां दूरतोऽप्यविरतोदितचित्ताः।
रामचन्द्रभजने विजनेषु कोविदा बहु मुदा विचरन्ति ।।55।।

ज्ञायतां नरपतेश्वर! तेन स्वीकृता भगवता तनुरेषा ।
यं वदन्ति च बुधा बुधनाथमेष शेषशयनो रघुनाथः।।56।।

वदाम्यदस्त्वामपरं परं यद् वक्तुं न योग्यं पुरतोऽपि कस्य ।
यत्किञ्चिदेकं परमं रमन्ते ये योगिनो यत्र तदेष रामः ।।57।।

एवञ्च सिद्धान्तविदो वदन्ति वेदान्त-कान्तारविचारसिंहाः।
अखण्डमानन्दविदेकरूपं यद् [4]वाप्यरूपं किल रामरूपम् ।।58।।

विज्ञाः परिज्ञातकलाकलापा अन्यैर्दुरापानपि पुण्यलोकान् ।
प्रयान्ति यागैर्विविधप्रयोगैः कृतैरमुं यज्ञपतिं विचिन्त्य ।।59।।

भोक्ता फलानामयमेव दाता विधेर्विधाता विविधस्य चायम् ।
व्याप्य स्थितो यः सकलं च विश्वं विश्वाधिराजो रघुराज एषः।।60।।

---

1. ०याः पतिर्वरायाः वि०, Ujj.
2. ०नायकस्य, G.N.J., Pu.
3. सन्तुष्टमना, G.N.J., Pu.
4. यत्राप्यरूपम्, Ujj.
   यच्चाथरूपम्, I.O.

पुण्याकुलं नः कुलमद्य जातं प्रायः प्रयातं पदवीमगम्याम् ।
मया श्रिया सेव्यपदस्य तस्य पदं पदं सर्वमुदामुपेतम् ।।61।।

यद् रूपचिन्तानिरताः सुशान्ताः कान्तारकान्ताः श्रमितामुपेताः।
अनन्तधामा रघुनाथनामा ददातु कामान् हरिराश्रितानाम् ।।62।।

विश्रान्तिहेतुः श्रमितस्य पुंसः संसार-कान्तारपरिभ्रमेण ।
नान्यो मुनीशैः क्वचिदेव दृष्टः कष्टप्रभेदाद् रघुनाथपादात् ।।63।।

सन्तापितानां भवसम्भवेन तापेन तीव्रेण शरीरभाजाम् ।
न रामचन्द्रादपरः परोऽस्ति सन्तापहारी परितोषकारी ।।64।।

सदैव रामो हृदये ममास्तु वस्तुप्रपञ्चैकनिदानभूतः।
पुरश्च पश्चात् परितोऽप्ययं स प्रोच्येवमासस्तिमितः क्षणं सः।।65।।

अभूत्पुनश्चित्रमदः सुमित्रे! प्रोन्मील्यनेत्रे! जितपद्मपत्रे! ।
नो ते वियोगो भवतादखण्डं रामेति नत्वाह सगद्गदस्तम् ।।66।।

रामसंस्मृतिकृतोऽतिसतोऽत्र स्वीयपाद-रजसापि पुनानान् ।
गेहि देहि निचयान् विनयांस्तान् संनयामि च कदा पद मक्ष्णोः?।।67।।

अहर्निशं चिन्तनमेवमेव प्रकुर्वतः श्रीरघुनन्दनस्य ।
दूरादपि स्पर्शविधौ कथं ते योग्या हृदो मे विषया भवन्तु ।।68।।

रामः समाकर्ण्य गुणान् स्वकीयानुक्तान् विविक्तान् मुनिना मुखेन ।
किञ्चित् स्मिता शोभिमुखान्तभागाः सागा इवागान्नतकन्धरत्वम् ।।69।।

अनन्तसन्तोषभरातुरान्तः कान्तं नितान्तं मुनिवर्यवाक्यम् ।
निशम्य राजा महतां सुखानां निदानमस्यावददानतास्यः।।70।।

क्रीडासु लोलेन सदा शिशूनां रामेण बालाकृतिनाऽमुना यत् ।
गुरो! कृतं राक्षसनाशकर्म तत्रास्ति[1] धर्मस्तव [2]नाथ! हेतुः।।71।।

---

1. ०पि, G.N.J., Pu.
2. एव, G.N.J., Pu.

अणुःकणश्चेद्दहनस्य दाहं करोति कुत्रापि महावनानाम्[1]।
नो कारणं तत्र पवित्रकीर्त्तेर्विना बलं तीव्रसमीरणस्य ।।72।।

प्राप्तं मुनेः श्रीरजसा पदस्य यद्यत् शिवं तत्सकलं विचिन्त्य ।
उवाच राजोदितरोमराजिर्नमः सतां पादरजःकणाय ।।73।।

केनापि पुंसा विधिभाजनेन सद्भावपीयूषरसप्रपूरैः।
सिक्तो यदि स्यात् पृथुपुण्यवृक्षः फलं सदक्षः सुतनूजमेति ।।74।।

कृतानि संख्यारहितानि येन तीव्राणि गङ्गापुलिने तपांसि ।
पुत्राः पवित्रा इति तस्य कर्णे वृष्टिः सुवर्णेन युता पुनः स्यात् ।।75।।

मुनिचरणसरोजे भूरिशो वन्दनानि
क्षितितलमिलदङ्गं रामतातो[2] विधाय।
कृतगृहगमनाज्ञस्तेन तुष्टः समेतो
निजजनसुतदारैरागमद् राजगेहम् ।।76।।

सवितरि परिपाते पश्चिमाद्रीशमौलिं
कृतजलचुलदानः सान्ध्यकाले नृपालः।
निजहृदि विनिधाय प्राणतः प्रेमपात्रं
कमलमृदुलगात्रं राममापत्सुनिद्राम् ।।77।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यावर्यदिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैतविरचिते नवमः सर्गः।।*



1. ०नस्य, G.N.J., Pu.
2. भूमिनाथो, G.N.J., Pu.

# दशमः सर्गः

जयन्ति रधुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ॥1॥

तदैव राजा निमिवंशरत्नं यत्नं तनूजोद्वहसाधनेषु ।
दिदेश सर्वानपि मन्त्रिवर्गान् गर्गाकृतीन् ज्योतिषशास्त्रविज्ञान् ॥2॥

दिष्टे वशिष्ठेन शुभे मुहूर्त्ते विचार्य मौहूर्त्तिकमण्डलेन ।
महाविवाहाहितमण्डपादिकार्यं नृपोऽकारयदुत्सवेन ॥3॥

[1]अलं बलं चन्द्रमसः सुताया विचारणीयं गणकाग्रगण्यैः।
एवं विदेहे वदति प्रियास्यां जातं तदा चित्रमदः सुमित्रे!॥4॥

श्रीरामचन्द्रस्य बलं ममास्ति कृत्यं न मे चन्द्रमसो बलेन ।
एवं हसन्ती जननीं वदन्ती चकार सीता किल कौतुकानि ॥5॥

स्वर्गालया अप्यबला बलारि-मुख्या बलं प्राप्य बलाश्रयस्य[2]।
[3]रामस्य शत्रोर्विदलन्त्यलं हि बलानि कालानलभाकुलानि[4]॥6॥

तन्मङ्गलं मङ्गलमङ्गलानामलं बलं तच्छशितारकाणाम् ।
लग्नं दिनं [5]चापि शुभं तदेव श्रीरामनामस्मरणं कृतं चेत्?॥7॥

---

1. अधिकः पाठः, G.N.J., Pu.
2. वलप्रदायाः, Ujj., I.O.
3. रामाङ्घ्रिधूले०, Ujj., I.O.
4. ०नि शत्रोः, Ujj., I.O.
5. तत् शुभदं मुदा यत्, G.N.J., Pu.

केनापि रामो हृदये कदाचित्[1] स्मृतो [2]मतो वावगतोऽर्चितोऽपि ।
नरो वरः [3]सर्वचराचराणामेवं पुराणा मुनयो वदन्ति ।।8।।

तदेव चेतः प्रयतं हि मातः सन्तः समस्ताः सततं ब्रुवन्ति ।
यत्सुन्दरं सर्वधुरन्धरस्य [4]दधाति रामस्य पदं कदाचित् ।।9।।

सीतावचस्तच्च निशम्य माता जाता [5]पराह्लादभरा त्ववोचत् ।
सद्भक्ति बाला भजनेऽनुकूला लीलातनोः श्ररघुनन्दनस्य।।10।।

रात्रौ च तस्यां जनकस्य कन्या धन्याकृतिं[6] राधवमेव चित्ते।
सञ्चिन्तयन्ती मनसा सुधांशु-रम्याननं नाश्रयदेव निद्राम् ।।11।।

वैवाहिकेऽहो दिवसे सुमित्रे! [7]पुरो विचित्रे परितो ध्वजाग्रैः।
या कापि शोभा रचिता पुरस्थैः स्वच्छैरपि ख्यातुमियं न शक्या ।।12।।

दृष्टेरभूत्तुष्टिरतीव दृष्टे रामे वरिष्ठाभरणावृताङ्गे[8]।
ममातिभाग्योदयवीक्षितायाः [9]नो शक्तिरस्याः कथने जनेषु ।।13।।

स्वभावतोऽयं रमणीयगात्रः पुत्रः प्रिये! मे किल रामचन्द्रः।
अलङ्कृतश्चाभरणैर्वरेण्यैः किं मानमस्तु प्रचये रमायाः?।।14।।

अग्निः प्रदीप्तो हृदयान्तराले करोति दाहं किमहं करोमि।
हा! हा! सुमित्रे! रघुनाथवक्त्रे या श्रीर्न कुत्रापि वद क्व यामि?।।15।।

---

1. ०पि, Ujj, I.O.
2. नतो, G.N.J.
3. सोऽत्र, G.N.J., Pu.
4. स्मरत्पदो रामपदे नखं तत्, Ujj., I.O.
5. ०ऽमिता०, ह्लादभरानुरागो, Ujj. I.O.
6. ०तेःश्रीरघुनायकस्य, Ujjj., I.O.
   ०तिं श्रीरघुनाथमन्तः, Pu.
7. पुरे, Ujj., I.O.
8. ०णैर्विशिष्टे, G.N.J., Pu.
9. ख्यातुं न जाने सखि! मानमस्याः, G.N.J., Pu.

मौलौ किरीटं तिलकञ्च भाले श्रुत्योर्विशाले मणिकुण्डले च ।
कण्ठे च मुक्तावलिरत्नहारः पारः श्रियो नो रघुनन्दनस्य ।।16।।

लसन्ति यत्राङ्गदसङ्गतानि [1]नूत्नानि रत्नानि निजांशुजालैः[2]।
[3]विषं द्विषं त्राशकतानुमेयं जाने भुजावस्य भुजङ्गराजौ ।।17।।

ईशेन नाशङ्गमिते रतीशे रत्याशुगद्रव्यममुष्य पाणौ ।
स्मरस्य बन्धोः प्रतिबद्धमुद्रं न्यस्तं नु वृन्दं सरलाङ्गुलीनाम् ।।18।।

संप्राप्य रामं सकला व्रजन्ति स्वकार्यसिद्धिं जगति प्रसिद्धाम् ।
न प्रापि भूषानिचयेन सातः सिद्धेर्विधाने हि विधिर्निदानम्।।19।।

स्वतोऽभिरामे परमेऽत्र रामे व्यर्थानि सर्वाणि विभूषणानि।
तथापि जाने मितमेव तेषु सार्थक्यमेतद् विमलाङ्गसङ्गः।।20।।

बालाः सुकाला [4]विमलान्तरालाः संवर्द्धिताः स्नेहभरेण[5] तेन।
सौभाग्यसीमा न हि किञ्चिदेषां रामेण मूर्ध्ना सततं धृता ये।।21।।

केकी विवेकी प्रतिभाति लोके यः केशपाशं रघुनन्दनस्य[6]।
संवीक्ष्य यातो वनमेव तूष्णीं तृष्णां न [7]किञ्चित् कुरुते रतेऽपि।।22।।

चामरं पामरं प्रायो [8]प्राप्तं यद् रामसन्निधिम्।
किङ्करस्य करे दत्तं तेन तद् भ्रामयत्यसौ।।23।।

पृष्टो वशिष्ठोऽस्य च जन्मराशिं [9]सुज्ञेन राज्ञा मिथिलाधिपेन।
अजो बलानामयमेव राशिर्ददौ हसन्नुत्तरमुत्तराय।।24।।

---

1. रत्नानि नूत्नानि, G.N.J., Pu.
2. शिरः प्रदेशे, Ujj., I.O.
3. लम्बायमानं युगुलञ्च दोष्णोर्विष्णोरमुष्या हि समं समासीत्।। G.N.J., Pu.
4. अ०, Ujj., Pu.
5. ०भरैरनेन, G.N.J., Pu.
6. ०नायकस्य, G.N.J., Pu.
7. दुःखात्, G.N.J., Pu.
8. यद् यातं, G.N.J., Pu.
9. राज्ञा परिज्ञानकुतूहलेन, Ujj., I.O.

आज्ञां समासाद्य धनेश्वरस्य गुरुः सतानन्द इति प्रसिद्धः।
भद्राय देहे विदधे हरिद्रां चन्द्रननायाः श्रुतितन्त्रमन्त्रैः।।25।।

देहे [1]वरस्यापि तदैव गेहे साकेतनाथस्य [2]तथा समस्तम् ।
गुरुर्वशिष्ठोऽप्यातिशिष्टदृष्ट-विधानमन्त्रैर्विदधे शिवानि ।।26।।

देहे विदेहेश्वरकन्यकायाः सौवर्णवर्णप्रतिपक्षवर्णे ।
उद्वर्त्तनं यद्रचितं हरिद्रा-चूर्णेन पूर्णं न फलं वितेने ।।27।।

[3]चित्रं तदाऽभूज्जगतां जनन्याः कान्त्या समन्तात्ततया तयासीत् ।
सर्वासु गौरीषु सुवासिनीषु श्यामासु तासु भ्रममापुरन्ये ।।28।।

[4]उच्छादनार्थं निहिताः समीपे कस्तूरिका-चन्दनकर्दमा ये ।
बालांश्च कालादिगुणप्रहीनान् [5]सीतारुचा नादधुरद्भुतं किम्? ।।29।।

स्नातावृता चैलवरैश्च सीता संभूषिता रत्नविचित्रहारैः[6]।
श्रिया जयच्चक्रधरस्य दारान् कण्ठेऽत्युदारान् श्रयतश्च हारान् ।।30।।

सीताननेन्दुप्रसरत्कराणां [7]वारास्तदारादपि[8] वर्त्तमानम् ।
सद्वर्णकर्णाभरणार्कयुग्मं[9] दिवापि चक्रुः पिहितं विचित्रम् ।।31।।

कराः कृता यद्यपि वीतसंख्याः श्रवो-विभूषा दिवसाधिपाभ्याम्[10]।
तथापि सीतावदनेन्दुनाऽसौ जितो विधिः कारणमत्र नान्यत्[11]।।32।।

---

1. वरस्य = कन्याभर्त्तुरित्यादर्शमातृकाऽभिधत्ते।
2. तथैव सर्वम्, G.N.J., Pu.
3. तदा विचित्रं जगतां, G.N.J., Pu.
4. उच्छादनार्थं = उद्वर्त्तनार्थमित्यादर्शमातृका ब्रूते।
5. नैवादधुस्तान् किमु तत्र चित्रम्, G.N.J., Pu.
6. ०विभूषणेन, G.N.J., Pu.
7. वाराः = समूहा इत्यादर्शमातृकाऽभिधत्ते।
8. ०दिह, G.N.J., Pu.
9. ०र्यमाणं, G.N.J.
10. ०पेन, G.N.J., Pu.
11. नूनम्, G.N.J., Pu.

जानक्या मुखचन्द्रोऽयमद्भुतो न कथं भवेत्?।
अरुणेनाधरेणालङ्क्रियते [1]रम्यरोचिषा।।33।।

एणीदृश इयं वेणी श्रेणीव सुमनोलिहाम् ।
आगता दूरतः सक्ता व्यक्ताननसरोरुहे ।।34।।

आखेटकामेन[2] मनोभवेन चित्तातिमैत्रेण निबन्धनाय।
आरोपितं [3]केशकलापदम्भात् कालं नु जालं क्षितिजांशदेशे।।35।।

[4]किञ्चिद् भ्रमद्भ्रूतिलकं प्रियाक्षि! प्रेक्षस्व वक्षोजकलाविलासि ।
उरः पुरः प्रेक्ष्य च जातशङ्का शङ्कातराक्षी तनुतेस्म मातुः ।।36।।

जानकीतनुररङ्गि कानने काम-वाममृगया कृतक्रमे।
बालता हरिणशावकोऽकरोन्निर्गमाय यतनं तदोचितम् ।।37।।

लोलता-नयनमीनबालके बालकेलिकुतुके तथाऽरतिः।
किञ्चिदञ्चितपदाऽत्र या गतिर्यागतिग्मसुकृतैः कृताक्षिसात् ।।38।।

लोलदृष्टिरसि कामकानने कानने स्थिरमहो! न ते मनः।
खेलने स्खलसि सस्पृहालिके हाऽलि! केलिकुतुकेऽद्भुतं त्वयि ।।39।।

विश्रान्तिदाता हृदयस्य रामः सखि! प्रयातुं त्वरयाभिरामः।
नैतन्मनो मे सहते विलम्बं नैवावलम्बं परमीक्षते तत् ।।40।।

सखी बहुस्मेरमुखी भुजाभ्यामालिङ्ग्य पूर्णेन्दुमुखीमवोचत् ।
आयाति रामस्तव कोऽपि कामः पूर्णो भविष्यत्यधुनैव सीते! ।।41।।

स्नानं विधानेन विधाय तैल-संयुक्तपीता घनकर्द्दमेन ।
रामोऽतिकालैर्वपुषोंशुजालैर्नीलं तलं संविदधेऽम्बरस्य ।।42।।

---

1. सहवासिना, G.N.J., Pu.
2. आखेटः = मृगयेति, Ujj.
3. केशमिषेण पार्श्वे जालं सुकालं जनकात्मजायाः, G.N.J., Pu.
4. अधिकः पाठः, G.N.J., Pu.

[1]लोकाभिरामस्य शिवे शरीरे भूषा[2] मनोहारिणि सङ्गतायाः[3]।
[4]प्रभीतया [5]लोकदृशोज्झनेन बिन्दुर्मया संरचितो ललाटे ।।43।।

नमस्कृतो यद्यपि सर्वदेवैर्देवाधिदेवो गुणधामरामः।
धृत्वा कराभ्यां हृदये विहाय लज्जां मया चुम्बित-आननाब्जे ।।44।।

कदा पुनः स्याद्वदनं समक्षं प्रायेण दक्षं करणे सुखानाम् ।
वनान्तराले चरतश्चिराय तत्रान्तराया बहवः सुतस्य ।।45।।

नान्या मया भूमितलेऽस्ति धन्या किञ्चाप्यधन्या परमा मदन्या ।
योगोऽभवत् श्रीरघुनन्दनेन प्रायो वियोगोऽपि सुतेन तेन ।।46।।

मेघद्युतेः श्रीरघुनन्दनस्य कण्ठे निबद्धामलमौक्तिकालिः।
दधाति शोभामियमिन्द्रनील-जालप्रणीतामपि[6] किं करोमि ।।47।।

अलङ्कृतं श्रीरघुनाथदेहमालोक्य कोटिस्मरजेतृकान्तिम् ।
अहं त्वहङ्कारविकारशून्या जाता क्षणं तत्क्षणपूरपूर्णा ।।48।।

रम्याकृतिस्ते रघुनाथ! तात! व्रातं घनानां जयति श्रियायाः।
उक्त्वैमेषा हृदयेन गाढं धृता स्मृताऽद्य प्रकरोति दाहम्[6]।।49।।

[7]आदित्यमप्यन्वयमूलभूतं प्रायः परीतं परितः प्रभाभिः।
कथं सुकान्ते! जयसि स्वकान्त्या रामो मदुक्त्या व्यहसत् शुभास्यः।।50।।

---

1. श्यामेऽभि०, G.N.J., Pu.
2. प्रायो, G.N.J., Pu.
3. पश्यतां नः, G.N.J., Pu.
4. हा! भी०, G.N.J., Pu.
5. तत्र, G.N.J., Pu.
6. तापम्, G.N.J., Pu.
7. सम्यक् त्वया राम! कृतं समस्तमेतद्विरुद्धं जयसि प्रभाभिः।
   आदित्यमप्यन्वयमूलभूतं स्मेराननं तं सततं नमामि।। – इति पाठान्तरम्, G.N.J.
   स्मेराननं रामभरं स्मरामि, I.O.

[1]परीक्षतो याभिरलं प्रतापः संसारजातः सकलः सुमित्रे! ।
अरीरमद् रामशरीरशोभा चन्द्रप्रभास्वेव मनो मदीयम् ।।51।।

शुचितरगुणपुष्पालङ्कृतालङ्कृतार्थ-
क्षितिविबुधवरिष्ठैः. प्रार्थ्यते कर्मसिद्ध्यै।
अमृतकिरणकान्तिस्वच्छकीर्त्तिप्रताना-
त्तवनवतनुवल्ली [2]राम! मे मानसेऽस्तु।।52।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजका-*
*चार्यवर्यदिगम्बरश्रीरामकृष्णाश्रमभगवत्पूज्यपाद-*
*शिष्याद्वैतविरचिते दशमः सर्गः।।*



1. अधिकः पाठः, Pu.
2. रामचन्द्रस्य साऽस्तु, G.N.J., Pu.

# एकादशः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ॥1॥

नेतुं वरं लोकगुरुं धराया ईशः सुवेशैः[1] सह लोकपालैः।
कुर्वन् दिशो घोषजुषो निनादैर्वादित्रजातैरगमन्महेशः॥2॥

अर्चां सचर्चाकुशलद्विजेन्द्र-प्रोद्धृष्टमन्त्रावलिभिरश्चकार ।
रामस्य पादाम्बुजयोर्विचित्रैर्वस्त्रैश्च रत्नाभरणैः[2] क्षितीशः॥3॥

[3]आसेचनं लोलकपोलसङ्गि-विद्युत्प्रभामण्डलकुण्डलाभ्याम्।
[4]निरीक्षितं प्रेमभरेण राम-मुखं तदा भूरिसुखं चकार॥4॥

स्पृशन् पदाब्जं निजमौलिना तत् श्रीरामचन्द्रस्य सुरेन्द्रनम्यम् ।
प्रेम्णाऽकरोल्लोचननीरधारान् भूरिप्रचारान् स धरातलेन्द्रः॥5॥

[5]श्रुत्यर्थविज्ञानविचक्षणेन जातक्षणेन क्षितिरक्षणेन ।
धन्योऽहमुच्चैर्बहुधेवमुक्त्वा सस्ने मुदा रामपदाब्जनीरैः॥6॥

---

1. ०शः, Ujj., I.O.
2. ०णप्रतानैः, G.N.J., Pu.
3. तदासेचकं तृप्तेनास्त्यन्तो यस्य दर्शनादित्यादर्शमातृका स्पष्टयति।
4. आलोकितं, Ujj., I.O.
5. हार्देऽखिलानां श्रुतिमण्डलीनां सुज्ञेन राज्ञा जनकाभिधेन।
   धन्योऽहमुच्चैः शतधैवमुक्त्वा स्नानं वितेने स्वपदोदकेन॥
   इति पाठान्तरम्, G.N.J., Pu.

संपूजितोऽसौ जनको जनानां भूषासहस्त्रैर्जनकेन रामः।
उद्वेलतामाप विलोकयन्त्या ममासमाकारसुखाम्बुराशिः।।7।।

स देवदेवोऽपि च देवबुध्या मत्पादयुग्मे व्यतनोत् प्रणामान् ।
तथैव राज्ञः किमु सर्वविज्ञ-शिरोललामस्य वदामि तस्य ।।8।।

मूर्द्धानमारूढरमेश्वरस्य स्फूर्जत्प्रभामण्डलमण्डिताङ्गः।
नमस्कृतः सर्वजनेन रामो [1]लेभे श्रियं पूर्वगिरिस्थभानोः।।9।।

[2]सौधाग्रभागाद् वनिताकुलानि प्रारुह्य सन्तोषपरिप्लुतानि ।
नेत्रैरमर्त्यैर्विदधुर्मुखस्य पानं विमानं रघुनन्दनस्य ।।10।।

केचित् सुमित्रे! प्रविकाश्यनेत्रे! पुत्रे मदीये निजमानसानि ।
निवेशयामासुरपास्य सर्वं तच्चाप्यपूर्वं परमन्तराऽसीत् ।।11।।

विलोकयन्तो नयनाभिरामं रामं पुरः प्रेमभरार्द्रचित्ताः।
[3]प्रापुः समस्ता अनिमेषभावं नामुत्र चित्रं परमं सुमित्रे! ।।12।।

स्मृतं न रूपं रघुनायकस्य भवन्तु[4] ते मूढधियो न चित्रम् ।
पश्यन्त एते पुरतोऽपि[5] रामं जाता[6] विमूढा इदमेव चित्रम् ।।13।।

तलं पुरो व्याकुलमेव सर्वं वृन्दैर्जनानामभवत्तदानीम् ।
नातः परो लाभभरो[7] धरायामेवं वदद्भिश्च महोत्सवेन ।।14।।

करोवरः सर्वकरस्त्वदीयो येनास्य कायो रघुनन्दनस्य ।
कृतः श्रितः काभिरयं प्रभाभिरेवं सुतुष्टा अवदंश्च शिष्टाः।।15।।

---

1. प्रापत्, Ujj., I.O.
2. अधिकः पाठः, G.N.J., Pu.
3. आ०, Ujj.
4. ०न्ति०, Ujj., I.O.
5. ऽभि०, G.N.J.,
6. रामं परन्तेऽप्यभवद्विचित्रम्, G.N.J.
   साक्षातपरन्ते०, Pu.
7. ०रः करान् स्वान् धुन्वन्त उच्चैरिति संवदद्भिः, Ujj., I.O.

नूनं गजेन्द्रः परमो हि भक्तो मौलौ[1] स्फुटं येन धृतोऽद्य रामः।
[2]उक्त्वैवमङ्गेषु दधुः शुभानि[3] रजांसि पादोच्चलितानि तस्य ।।16।।

श्रीराम! राजीवविलोचनाद्य–प्रोद्यत्पदं दृष्टमदृष्टयोगात्[4]।
[5]नो यातु दूरे हृदयाद् वदन्तः सन्तः[6] प्रणीता मुदमीक्षितेन ।।17।।

स्वभावतो मन्दगतिर्गजेन्द्रः कृपासमुद्रः किल रामचन्द्रः।
तृषो विनाशाय [7]दृशोर्जनानां ततोऽपि मन्दाङ्गतिमाततान[8] ।।18।।

कुर्वन् जनानन्दमपारमेव सेवन्त एतच्चरणञ्च देवाः।
संत्यक्तपुष्पोद्गतरेणुसङ्गाच्चक्रुः क्षणं वीक्षणविघ्नमेषाम् ।।19।।

तद्वीक्ष्य रूपं रघुनन्दनस्य[9] यन्मोहनं सर्वचराचराणाम् ।
लेभे गतेर्विस्मरणं जनानां यश्चापि चक्षुः सविता किमन्यत् ? ।।20।।

अतृप्तचेता अपि वीक्षणेन तस्याः श्रियः श्रीरघुनन्दनस्य ।
भानुर्जगामैव पुरः कथञ्चिन्मुहूर्त्तवेलाविकलत्वभीतः।।21।।

करग्रहे भूमिभुवो विलम्बो भविष्यतीति प्रणतीर्विधाय ।
संप्रार्थितो[10] देवगणैरथायं करोतु किं हा! परवान् दिनेशः।।22।।

[11]किञ्चान्तरेऽमानि कृतार्थभावो दिवाकरेण प्रियताभरेण ।
स्पृष्टः कराणां निकरेण देहो रामस्य नेहोपमितिर्यदीया ।।23।।

---

1. व्यक्तं धृतो येन च केन, Ujj., I.O.
2. प्रोक्तैव, G.N.J., Pu.
3. पवित्रास्तत्रापि गोत्रापतयेऽङ्घ्रिधूलीः, Ujj., I.O.
4. ०मन्यैः, G.N.J.
5. नायातु नित्यं, G.N.J., Pu.
6. प्राय०, G.N.J., Pu.
7. जनेक्षणानां, G.N.J., Pu.
8. ०दिदेश, Ujj., I.O.
9. ०नायकस्य, G.N.J, Pu.
10. ०प्रेरि०, G.N.J., Pu.
11. ०शयेऽमानि, G.N.J., Pu.

[1]रामो दयालुर्निजदासवंश्येऽप्यत्रास्ति नो द्वापरलेश एव ।
स्फुटं गजेन्द्रान्वयजो गजोऽयं कृतः कृतार्थाश्चरणार्पणेन ॥24॥

[2]नेत्रातिथिर्भूरिपथानतीत्य प्राप्तः[3] समीपं नृपमन्दिरस्य ।
जालान्तराले निहितनानाया [4]रामोऽभवत् श्रीजनकात्मजायाः ॥25॥

प्राप्तेऽतिरम्ये रघुनाथरूपे श्रीभूषणे भूमिसुता जनेभ्यः।
नो कार्यमासामिति जाततोषा[5] नीराजयित्वा तमदाद् विभूषाः ॥26॥

भानोरिवालोकयितुमहो नो श्रीरामचन्द्रस्य बभूव शक्ताः ।
अद्योमुखी सा शनकैरवादीन्नमो नमः श्रीरघुनन्दनाय ॥27॥

अथो ददौ सा नयनं सुमन्दं श्रीरामचन्द्रस्य मुखाग्र्यचन्द्रे ।
तज्जातसौन्दर्यसुधातरङ्गैः प्रायो हतं व्याकुलामवाजीत् ॥28॥

देवेन दैवं जनकतात्मजायाः सृष्टं वरिष्टं जगतामिदं[6] यत् ।
प्राप्तो मुखश्रीर्जितपूर्णचन्द्रः श्रीरामचन्द्रो जनतेत्यवादीत् ॥29॥

अवोचदेवं[7] स्वसखीमधीरा सीता समुत्कण्ठितमानसाऽस्मिन् ।
गृह्णातु पाणिं त्वरयैव रामश्चेतःशरैः कृन्तति हाऽद्य कामः॥30॥

साऽप्याह किञ्चित्स्मितसुन्दरास्या मन्दं वयस्या तनुजा धरायाः।
धार्यं त्वया धैर्यमधैर्यमार्ये ! नेच्छन्ति कार्येषु हि वर्यवर्याः॥31॥

किञ्चित् तवायं प्रियतामुपैति सत्यं वद प्रेयसि! रामचन्द्रः।
आलिङ्ग्य दोर्भ्यां निजमेव वक्षः सन्दर्शयन्ती जहसुः समीक्ष्य ॥32॥

---

1. देवो, Ujj., I.O.
2. जातो तिथिर्वीथि०, Ujj., I.O.
3. यातः, G.N.J., Pu.
4. श्रीरामचन्द्रो, G.N.J., Pu.
5. राममेषा, G.N.J.
   रामयोषा, Pu.
6. ०महो, Ujj, Pu.
7. ०नं, I.O.

किञ्चाप्यवोचद् हसितायतास्या सीता वयस्यां सखि! किं वदामि?।
एतादृशं चेदपरं हि पात्रं प्रेम्णो भवेत्तत्र निदर्शनं स्यात् ।।33।।

अनन्यचिन्तां प्रसमीक्ष्य सीतां सखीं हसन्तीं जगदे हसन्ती ।
जातं मनो मे रघुनाथरूपं नान्यत्स्वरूपं सखि! मे विभाति ।।34।।

ध्यानात् प्रयाते हृदयान्तरालं रामे ममालं बलमेव चेतः।
नायाति कुत्रापि पयोदमित्राकृतिप्रतीक्षा-रसलालसं सत् ।।35।।

नीत्वा रहः काचिदुवाच सीतां ध्यानेन यातां रघुनाथभावम् ।
प्रयाति चेतोऽतिभयं मदीयं विलोक्य रामे हृदयं त्वदीयम् ।।36।।

नूनं गता भूरितरा धरायामेवं पुरा या अतिसक्तचित्ताः।
कुत्रापि गोत्रा तनयो नयेन विभ्रान्तचित्ताश्च पिशाचभावम् ।।37।।

त्वमेव यातासि पिशाचभावं चित्रं यदेवं वदसि प्रियेऽद्य ।
पुण्यैः शुचिः कोऽपि रुचिं प्रयाति रामे हसन्तीति जगाद सीता ।।38।।

दारा [1]उदारार्पितकण्ठहारा हा! राम! रामेति मुदा वदन्तः।
श्रियं समालोक्य परां तदीयां नीराजनानि[2] स्वकरैर्वितेनुः ।।39।।

चक्रुः पुनर्जातपरप्रमोदाःसख्योऽपि सर्वाः प्रमदा नृपस्य ।
स्पृष्ट्वा करैर्भूमिभुवः प्रणामा भालाय जालाय महाफलाय ।।40।।

नालीकमेतत् प्रवदाम्यलीकं[3] वीतोपमं तारकमम्बुजाक्षि!।
कान्त्या जितो येन च नाम कामः पतिः स रामः सुमगे! त्वयाप्तः ।।41।।

जाने भवत्या बहुभाग्यवत्या स्तुत्यानि कृत्यानि पुरा कृतानि ।
किञ्चाश्रितानि प्रियदैवतानि सीतेऽन्यथैतानि कुतो हि तानि?।।42।।

श्रुत्वा प्रियाणां प्रियभाषणानि पीयूषरोचिःकरशीतलानि ।
आस्यं सहास्यं नतिमानयन्ती. तस्थौ सुता तोषवृता धरायाः।।43।।

---

1. नृपस्यापि च, Ujj., I.O.
2. ०नं स्वीय०, G.N.J., Pu.
3. अलीकं = मिथ्येत्यादर्शमातृकाऽभिधत्ते।

किं वा तपोऽकारि तयाऽविकारि कृत्वा मनः स्वीयमरं चिरं सत् ।
नैवान्यथा रामनिधेर्निधानं भवेदियं सर्व इति प्रणेदुः ।।44।।

एवं विचित्रा जनवृन्दवाक्यान् शृण्वन् कथा मानसमञ्जुलार्थाः[1]।
[2]दृष्ट्यैव तोषं प्रविधाय रामो धामोदधिः सोऽवतरद् गजेन्द्रात् ।।45।।

गत्वाग्रतो वेगवती त्वमाभिः प्रिये! प्रियाभिः सकलाभिराशु ।
प्राणप्रियं प्रापय रामचन्द्रं तेनातिभद्रं मनसो मम स्यात् ।।46।।

सा चाह सीतां बहिरद्य रामः प्राप्तो गृहस्याद्य तवास्तु कामः।
सम्पूर्ण एष प्रबभूव तोष-प्रोल्लासितान्तं मुखमिन्दुमुख्याः।।47।।

तस्यै ददौ जीवनवल्लभायै प्राणप्रियं हारमुदारतारम् ।
आनन्दसम्मग्नमना मनाक् सा तदा न वेदाण्वपि बाह्यमज्ञा ।।48।।

प्राप्तं करे पुण्यभरेण रामं मुञ्चेदमुं कोऽपि च नात्र कामम् ।
स्वार्थेषु लुब्धेषु कुतो जनेषु चिन्ता भवेत्प्रेयसि! हा! मदीया ।।49।।

जपन्तमप्यालि! विनाशनानि पापस्य चाशेषसुखप्रदानि ।
नामानि रामस्य विलोक्य लोकं के के न शोकं भवनं त्यजन्ति?।।50।।

यदोत्तितीर्षुर्भगवान् गजेन्द्र-शिरःप्रदेशात् स च रामचन्द्रः।
आक्रन्दनं यद् विदधे स दीनो व्याख्यातुमीनो[3] न [4]हि कोपि देही।।51।।

संप्ररितोऽप्यङ्कुशतीव्रघातैर्यन्त्रात्स्वमौलौ विहितासनेन ।
उद्दिश्य रामं नतमाततान शिरो न कायं गजराट् विचित्रम् ।।52।।

शक्तो न वक्तुं रघुनाथपाद-वियोगदुःखं जनतां गजेन्द्रः।
जात्या पशुर्हा विधिना विहीनश्चीत्कारदम्भात्प्रखरं रुरोद ।।53।।

---

1. साधु तथा यथार्हम्, G.N.J., Pu.
2. कृपावलोकैः सुखयन् समस्तान् रामोऽवरोधाभिमुखो बभूव।। Ujj., I.O.
3. ०महीनो०, Ujj., I.O.
4. विधातुमीशः, Ujj., I.O.

श्रीरामनामस्मृतितो[1] भवन्ति रोमाणि यस्योल्लसदन्तराणि ।
दृग्वारिधारा रचिताश्च हारा:[2] कण्ठे विकुण्ठेशसखः स एव ।।54।।

राजते भक्तराजस्सः यस्य रामस्मृतेर्भवेत् ।
गात्रं रोमाञ्चितं नेत्रं सजलं विकलं वचः।।55।।

स पुमान् पावनः कामं यस्तु रामं स्मरन् हृदि ।
गात्रे रोमोद्गमं नेत्रे वारिधारां च संश्रयेत् ।।56।।

मुञ्चन् युगाल्लोचनयोर्जलस्य धारा अपारा वचनेष्वशक्तः।
धुन्वन्निषेधाय शिरः पुरस्ताद् रामस्य चक्रे करमङ्घ्रिपद्मे ।।57।।

उत्तीर्यतां राघव! लाघवेन त्रैलोक्यराजाद्य महेभमौलेः।
[3]वदन्तमेवं जनमुत्करेण हन्तुं प्रवृत्तः किमसौ करोतु? ।।58।।

उत्तीर्य कष्टाद् गजतस्तदिष्टाद् भक्ताद्वरिष्ठाद् भुवि यश्च तिष्ठत् ।
श्रीरामचन्द्रः श्रितपादरक्षः श्लक्ष्णाकृतिः सत्कृतिभिर्व्यलोकि ।।59।।

दैवं धराया उदयं प्रपेदे विध्वस्तखेदेन पदेन विष्णोः।
रामस्य याता सह सङ्गमं सा येनोद्धृता पूर्वमधः प्रयाता ।।60।।

रघुपतिरथदूराद्दारवाराश्रयास्त[4]-
जनकृतनतिरग्रे हेममाणिक्यपीठम् ।
सुविनयमुपनीतं भूभुजा श्रीभुजाभ्यां
[5]मृदुपदनखरत्नैरञ्जयन्नाससासद ।।61।।

आसेदुरन्तर्गृहमेनमेते राजा वरिष्ठाश्च निजास्तनूजाः।
ताश्चापि योषाः श्रितरम्यवेशा भूषामणिद्योतितसौधदेशाः।।62।।

---

1. ०स्मरणात्प्रफुल्लरोमालिमालि! क्वचिदस्य देहम्। G.N.J., Pu.
2. हारस्तले गलस्यापि सदैव देवः, G.N.J., Pu.
3. एवं वदन्तं तु नरं करेण, Ujj., I.O.
4. दाराणां वाराः = समूहास्तेषां आश्रया = गृहाणि, तत्र अस्ता = न्यस्ता जनास्तैः कृतनतिरित्यादर्शमातृका ब्रूते
5. निज०, G.N.J., Pu.

आनन्दसम्फुल्लमुखाम्बुजातस्तातः सुताया [1]भुव आप्तकामः।
युक्तो निजैर्बन्धुवरैश्च दारैः सर्वैः कुमारैर्गुरुभिः सहाजीत् ।।63।।

अभूदनन्तं[2] परितो वृतान्तं कान्तासमेतैरमरेश्वरैस्तैः।
तत्कौतुकालोकनलोलचित्तैः किञ्चोच्चरद्भिर्जय-राघवेति ।।64।।

यो युक्तमप्याचरति स्वकीय-दासप्रियापूरणमात्रकामः।
सीता-समेताय च राघवाय तस्मै नमश्चेति च ते समूचुः।।65।।

श्रीरामतात! कुरुषे पुरुषेन्द्रचित्रं ब्रह्माकृतिस्त्वमसि ते कृतिरीदृशी यत् ।
उक्त्वैवमम्बरतले सकले वरं स्वं कुर्वन्नतं सुरपतिः प्रणतीश्चकार ।।66।।

[3]विज्ञानि-विज्ञापितलग्नकालः क्ष्मापालविज्ञस्त्वरया विदेहः।
अरं स्मरन्मङ्गलनाममालां बालां सुशीलां[4] गुरुणानयत् स्वाम् ।।67।।

सुवासिनीमण्डलमण्डिता सा या पण्डिता हंसबधूप्रचारे ।
[5]ययौ गृहं नूपुरसिञ्जितेन संनादयन्ती मिथिलेशपुत्री[6]।।68।।

नो सिञ्जितं पादविभूषणस्य मन्दं[7] चलन्त्या अचलात्मजायाः।
किन्त्वेष मन्त्रो मनसो विकर्षे [8]निवृत्ततर्षेज्यपदस्य जातः।।69।।

[9]प्रावारवस्त्रावृतसर्वदेहा याऽहो[10] विदेहाधिपतेस्तनूजा ।
परं व्यरोचत् स्वमहोऽवदीर्ण-सुवर्णपत्रस्थितकान्तिपुञ्जा ।।70।।

---

1. अपि भूतधात्र्याः, G.N.J., Pu.
2. अनन्तम् = आकाशमिति, Ujj.
   अभूदननतमित्यारभ्य 'श्रीरामतात'पर्यन्तमधिकः पाठः। Ujj., I.O.
3. विज्ञानि = ज्योतिर्वित्, इत्यादर्शमातृकाऽभिधत्ते।
4. सहर्षं, G.N.J., Pu.
5. अगात्, Ujj., I.O.
6. जनकस्य, G.N.J., Pu.
7. रम्यं, Ujj., I.O.
8. निवृत्ततर्षा = योगिनस्तैरिज्यपदस्य रामस्येत्यादर्शमातृकाऽभिधत्ते।
   श्रीरामचन्द्रस्य बभूव सद्यः, G.N.J., Pu.
9. प्रावारः = आवरणमिति, Ujj.
10. याति स्फुटे हा! रघुनाथवक्त्रे, G.N.J., Pu.

किञ्चित् स्फुटं चारुमुखं तदीयं कटाक्ष-विक्षेपणदक्षदृष्टिः।
आलोक्य लोकोत्तरधैर्यपात्रं जातं विचित्रं स मुमोह रामः।।71।।

दत्तावकाशापि च रामयोषा तदङ्गसङ्गोदितभूरितोषा[1] ।
संघट्टनामेव विधाय देहे रामस्य सोपाविशदद्भुतं तत् ।।72।।

एकासने तौ विहितोपवेशौ मनोज्ञवेशौ विततप्रकाशौ ।
सीता सहस्रांशुकुलावतंसौ संलोक्य लोका विदधुर्वितर्कम् ।।73।।

इयं नु[2] सीता प्रभया परीता जाताऽत्र लक्ष्मीर्जगतोऽस्य माता ।
प्रायेण रामः परिपूर्णकामो नारायणश्चेत्यवदद् विदेहः।।74।।

इयं नु[3] गौरी जनकस्य पुत्री भासा विचित्रीकृतसर्वदेशा[4] ।
अयं हरः सर्वमनोहरश्रीः श्रीरामचन्द्रो जननीत्यवादीत् ।।75।।

सीतारतिः [5]सर्वसती-प्रतीत [6]निर्व्याजशीला रमणीयकान्तिः।
रामस्तु कामः प्रथितोग्रधाम-व्यायामकीर्त्तिक्षयकृत्प्रभावः।।76।।

सीता नु गीतामलकीर्त्तिजाला बालाऽचलायाश्च विभा विभाति ।
रामस्तु [7]सूरः स्वकरप्रचारःप्रध्वंसितध्वान्तविपक्षपक्षः ।।77।।

किं कौमुदी दीर्णमनःप्रतापा सम्पश्यतो[8] मे प्रतिभाति सीता ।
श्रीरामचन्द्रः [9]परिपूर्णचन्द्रः सान्द्रं जनाः यान्ति यतः प्रमोदम् ।।78।।

---

1. ०ङ्गोदय, I.O.
2. तु, G.N.J., Pu.
3. तु, G.N.J., Pu.
4. सौघदेशा, G.N.J., Pu.
5. साधुसती०, G.N.J., Pu.
6. सौशिल्पलीला, G.N.J., Pu.
7. भानुर्विलसत्स्वभानु०, G.N.J., Pu.2
8. ०तामद्य विभाति, G.N.J.
9. किल, G.N.J., Pu.

रामो नैव नरो विभाति च पुरो वैश्वानरो विस्फुर-
त्तेजःपुञ्जशरीरदीपितदिशादेशान्तरालान्तरः।
नूनं खञ्जनगञ्जनाक्षियुगला स्वाहा विदेहात्मजा[1]
नैनं मुञ्चति कुञ्चितालकलसद्भालाप्यबाला[2] जगुः।।179।।

[3]इयं हि माया किल रामजाया नायाति यस्याः कृतिरत्र पारम् ।
रामोऽपि नामोदितसर्वलोकः स्तोकाकृतिः केवलमीश्वरोऽयम् ।।180।।

लग्नेंशमात्रे सति कर्मसक्तान्विधाय सर्वानतिसावधानान् ।
विदेहकन्या रघुनाथमध्ये संधारयामास पटं वशिष्ठः ।।181।।

नायं पटः कपटमाचरितं विधात्रा
नेत्रातिथिर्भवति नामलवक्त्रचन्द्रः।
श्रीराघवस्य मनुतेस्म तदैवमेषा
[4]रोषारुणेक्षणयुगा क्षणमत्र सीता ।।182।।

शिष्टोऽप्यशिष्टाचरणो वशिष्ठः कष्टाद्धि दृष्टाकृतिरीश्वरस्य ।
येनाप्यदृष्टा विहिताधुना मे रामेन्द्रियाऽसौ शनकैरवादीत् ।।183।।

नो जायते किञ्चिदमुष्य लज्जा योऽयं मुखं दर्शयति स्वकीयम् ।
विघ्नः स्फुटं येन कृतोऽवलोके लोकेश्वरस्याननवीक्षणस्य ।।184।।

भवेत् कथं बालिश एष वृद्धः किञ्चाप्रवृद्धः परितो विवेकैः।
जानाति नायं परकीयखेदं धत्ते प्रभेदं बत वेदवेत्ता ।।185।।

शक्ता न सोढुं क्षणतो वियोगं श्रीरामचन्द्राननवीक्षणस्य ।
[5]उद्वर्त्तुमेषा पटमुद्यताशा जाता धृता पाणियुगेन सख्या ।।186।।

सद्भागधेयेन विधेयमेतदेते हसिष्यन्ति विधानलोपात् ।
एवं हसन्ती च जगाद कर्णे पूर्णेन्दुवक्त्रा बहुशो वयस्य ।।187।।

---

1. ०ङ्गजा, Ujj., I.O.
2. अबालाः = सुज्ञा इत्यादर्शमातृका स्पष्टयति।
3. अधिकः पाठः, G.N.J.
4. रोषाकुले०, G.N.J., Pu.,
5. उद्ध०, G.N.J., Pu.

एवं विधिं [1]सन्निधिरंहसां स प्रव्यक्तमेवालिजनेषु वक्ति ।
प्राप्तं तिरोधानमदो निधानं महासुखानां रघुनाथरूपम् ।।88।।

प्राणाः प्रिये! गन्तुमिमे शरीराज्जातोत्सवा सन्त्ययि! किं करोमि ? ।
रामाननं काननमिन्दिरायाः क्रीडाविधानस्य न दृश्यतेऽग्रे ।।89।।

गुरुं कुरु प्रार्थनमर्थविज्ञे! शिरश्चिरं पादयुगे निधाय ।
अलं विधानेन विधेरमुष्य [2]प्रेष्या भविष्यामि तवापि सत्यम् ।।90।।

नो चेत् प्रदेयः सुभगेऽस्य हारो येनापहारो भविता शुचोऽस्याः।
लाभात्करिष्यत्यधुनैव दूरे वस्त्रं [3]नु स्रस्तं स्फुरदन्तराले ।।91।।

शीघ्रं द्विजे दर्शय पापमस्य बध्वाबधाद् वाहविवाहमध्ये ।
नास्मिन् प्रिये! विप्रियकारि काले त्यागत्रपायाः किल दूषणाय ।।92।।

भूयोऽवदत्सा क्षणमात्रमत्र सराजेपत्राकृतिलोचने! त्वम् ।
कुरुष्व धैर्यं स्वयमद्य कार्यं सिद्धिं प्रिये! यास्यति मानसस्थम् ।।93।।

किमुच्यते मूढमतिं बतेदं मया दयाशून्यहृदं वचस्त्वाम् ।
श्रीरामचन्द्राङ्घ्रि-वियोगदुःखं जानाति रामो न नरः परस्तत् ।।94।।

न ज्ञानिनि ज्ञानकलालवोऽपि शिष्टे वशिष्ठे किल चिन्तनीयः।
कृतः प्रयत्नो जनजीवनस्य येन स्फुटं हा! हरणे किमन्यत् ? ।।95।।

आप्तोऽप्यनाप्तो न कथं गुरुः स्याद्येनाम्बरेणेव पयोधरेण ।
सीतास्यचन्द्रः पिहितोऽहितो मे रामोऽपि [4]दुःखादवदद् हृदोऽन्ते ।।96।।

जातं तदा [5]मानसमस्य पूर्णं दुःखाम्बुपूरैः[6] प्रवदामि सत्यम् ।
नो चेत्कथं नेत्रयुगाज्जलस्य धाराः समन्तात्सहसा प्रवृत्ताः?।।97।।

---

1. हा ! नि०, Ujj., I.O.
2. प्रेष्या = दासीत्यादर्शमातृकाऽभिधत्ते।
3. तु, Pu.
4. कोपा०, G.N.J., Pu.
5. ०भ्यन्तर०, Ujj., I.O.
6. दुःखेन सीतास्यधियो गजेन।
तन्नेत्रवाराममितोऽपि द्याराश्चक्रुः प्रचारानुसरः प्रदेशे।। Ujj., I.O.

किञ्चातिलज्जां प्रविहाय दूरे सीताननप्रेक्षणलालसः सः।
नेत्रे दधावम्बररन्ध्रजाले तत्तत्र काले कुतुकं प्रियेऽभूत् ।।98।।

रामेण कर्णाभरणार्कयुग्म-तिग्मप्रभासंवृतपूर्णभागः।
नालोकितः स्पष्टतरान्तरालः सीतामुखेन्दुः सुमुखं न लेभे ।।99।।

अकृत्रिमश्रीभरपूरितान्त-सीताननेन्दौ निहतप्रतापो ।
विधीयते किं मणिकुण्डलाभ्यां पुनः सतृष्णोऽवददानतास्यः।।100।।

ज्ञातं [1]किमेतत्करुणाकरेण वैक्लव्यमेतन्मनसः शिवेन?।
क्षणो भवेद्येन [2]तयोस्तदैव प्राप्तः क्षणो लक्षणमेतदस्य ।।101।।

स्नात्वा विदेहः परिपूरितेहः[3] श्रीरामचन्द्राङ्घ्रिनिरीक्षणेन[4] ।
कर्त्तुं प्रदानं विधिवत्सुताया उपाविशत्तत्र कलत्रयुक्तः।।102।।

[5]प्राप्ते क्षणे क्षेमकरे नरेशः संप्रेरितोऽसौ सहसा गुरुभ्याम् ।
ददौ करं रामकरे सुताया अग्रे कृताया रघुनन्दनस्य ।।103।।

आनन्दसंसूचकवाद्यनादाः [6]वेदप्रवादाश्च हतावसादाः।
ध्वानाः परे दैवतदुन्दुभीनां जाता [7]अनन्ता युगपत्सुमित्रे! ।।104।।

ऊचुश्च देवाः कृतदेवदेवाः आनन्दभावाद् विहितोच्चरावाः।
स्थातव्यमद्यादरतोदरस्ते प्राप्तः परः पामररावणोति ।।105।।

चित्रं समाकर्णय भूय एतद् यद्वृत्तमस्मिन् समये सुमित्रे!।
सन्नादितं जातमनन्तमन्तर्नादैः समन्तात्सुरदुन्दुभीनाम्।।106।।

---

1. तदे०, G.N.J., Pu.
2. तयोः क्षणेन यातः क्षणस्तच्छृणु संमदाय, G.N.J., Pu.
3. ०शुद्धदेहः, Ujj.
4. ०न्द्रेण लसन्मुखश्रीः, G.N.J., Pu.
5. काले प्रयातेऽतिशिवे, Ujj., I.O.
6. पुण्या द्विजानामपि वेदघोषा, G.N.J., Pu.
7. सुमित्रे! युगपत्तदानीम्, G.N.J., Pu.

स्फीतञ्च गीतं सुरसुन्दरीणां वृन्दानि चक्रुः सुखसंप्लुतानि ।
किञ्चातिवर्षं कुसुमैः सहर्षं श्रीरामशीर्षे विबुधा वितेनुः।।107।।

पाणौ धृते सति करेण जगद्वरेण
रामेण नाम निहताखिलपातकेन ।
जाता क्षणं सुखनिमीलितलोचनान्ता
[1]कान्ता चराचरगुरोः प्रणयेन सीता।।108।।

यत्पादरेणोरपि सङ्गमेन सुखं सखि! स्यादतिसंख्यमेव ।
तस्यापि चेत्पाणियुगेन योगः को वाऽत्र भोगः सुधियां दुरापः?।।109।।

स्वेदसिक्तमभवद्वपुरस्या हास्यनिर्जितसुधाकरभासः।
शीतशीतलरघूद्वहपाणि-स्पर्शहर्षभरसङ्कुलितायाः।।110।।

न्यस्तेक्षणा राघव-वक्त्रपद्मे सद्मन्यलं पद्मनिकेतनायाः।
सद्योगिनी वा चलचित्तवृत्तिः सीताऽभवद् विस्मृतदेहभावा ।।111।।

अकारि पूर्वं नियमैरपूर्वं पुण्यं जपो गौर्यविधोर्चितो वा ।
नैवान्यथा स्याद् रघुनाथदास्यं विधाय हास्यं क्षितिजा जगाद ।।112।।

जाता कृतार्था विधिनार्पितार्था तीर्थायने चाप्ययने[2] द्विजेभ्यः।
पुरा पुराराति-पदारविन्दं विचिन्त्य मन्दं पुनराह सीता ।।113।।

नातः परं गच्छति रामचन्द्रः कुत्रापि [3]गोत्रापति - पुत्रिकेयम् ।
किं नेत्रमत्रैव निवेशितं [4]तत् प्राप त्रपामालि! विनोदवाक्यात् ।।114।।

रत्ने प्रयत्नेन मयाद्य लब्धे रामेति मुग्धे! जगतां विदग्धे!।
चेतः कुतस्तद् विदधातु यत्नं कुतोऽपि गन्तुं प्रवदन्तु सख्यः?।।115।।

---

1. सीताऽतिपुण्यपरिपूर्णमनोऽभिलाषा, Ujj., I.O.
2. अयने = उत्तरायण-दक्षिणायने, Ujj.
3. पुत्रि! क्षितिपालकस्य, G.N.J., Pu.
4. ते, G.N.J., Pu.

यत्रागमो नैव नभस्वतोऽपि स्वतो भवेद्दुर्गमदुर्गमध्ये ।
संरक्षितस्तत्र न कुत्र याता त्रातापि लोकस्य स रामचन्द्रः।।116।।

सदा प्रचारञ्च चराचरेषु करोषि नस्तच्छ्रुतमस्ति राम! ।
बद्धोऽनया श्रृङ्खलया दृढं त्वमस्याः कथं यास्यसि पादमात्रम्? ।।117।।

यद्यन्तरे त्वं हृदयस्य बद्धो लोके प्रसिद्धोऽपि महाबलेन ।
श्रीसीतया सल्लतया विवेकैरेकेन किं रे भवता विधेयम्? ।।118।।

आकर्ण्य तासां परिहासवाक्यं सीताननं श्रीरघुनन्दनस्य ।
निरीक्ष्य किञ्चित् स्मितशोभनास्या बभूव लज्जाभरजोऽवनम्रा ।।119।।

गच्छन्त्वथैते सुखतः स्वतन्त्राः श्रीराजपुत्राः प्रमिलत्कलत्राः।
यत्रैव रामः किल तत्र सीता लोके प्रणीता जनता वदन्ति ।।120।।

प्राणप्रियाया जनकात्मजाया जातः प्रहासः परिहासवाक्यात् ।
विलोकयन् वक्रदृशा तदास्यं हास्य-प्रशस्यं मुदमाप रामः।।121।।

फुल्लाननाब्जैः क्षितिदेवराजैर्लाजैश्च होमो विहितो हितोत्कैः।
चक्रेऽवशिष्टं च विधिं वशिष्ठो यश्चापि दृष्टो निगमेषु शिष्टैः।।122।।

एवं श्री रघुनायकेन [1]विभुना सीताकरे स्वीकृते
पूर्णानन्दमगाद् विदेहनृपतिः सत्रा च मित्रादिभिः।
[2]दृष्ट्वा राममयुं पयोदपटलं नृत्यत्पताकावलिः
सन्तोषातिशयादभूत्[3] क्षितिसुता गौरी मयूरी [4]समा ।।123।।

---

1. दुहितुः पाणौ सखि! स्वीकृते
   राजाश्रीजनकः सुखं वनितया साकं पुरं प्राप्तवान्। G.N.J., Pu.
2. सीतां प्राप्य पुरं, G.N.J., Pu.
3. ०द् बभूव सुभगा, G.N.J., Pu.
4. यथा, Ujj., I.O.

कल्याणं कुरुतादयं रघुपतिर्येनाकृतिः स्वीकृता
त्रातुं राक्षसभारतोऽनवरतं खिन्नामलां मेदिनीम् ।
विष्णुर्धिष्ण्यमुदञ्चितं धनचिदो भेदो न यत्रोदितः
सीताशक्तिसमाश्रितः स्मितमुखः सञ्जातपाणिग्रहः।।124।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैतविरचिते 'रघुनाथविवाहो'नामैकादशः सर्गः।।*



# द्वादशः सर्गः

जयन्ति रघुनाथस्य पदपङ्कजपांसवः।
मूकोऽपि वावदूकोऽयमद्वैतो यदुपाश्रयात् ।।1।।

स्वामिन्! वशिष्ठ! शुभदिष्टवता मयाप्तं
त्वत्पाद-[1]सङ्गमवशात्सकलं हृदिष्टम् ।
[2]किञ्चावशिष्टमिह [3]कर्मसुधर्ममर्म-
प्रज्ञाश्रय! प्रवद मैथिल इत्युवाच ।।2।।

जातं समस्तं श्रुतिभिः प्रशस्तं यथा तथेदं हि विवाहकर्म ।
बध्वा वरस्याद्य[4] मिथः प्रणाम-पूर्वं [5]विधेया कुतुकाय लीला ।।3।।

श्रुत्वा वशिष्ठस्य वचो विदेहः स्नेहाश्रुसंचारमनोहराक्षः।
आज्ञापयत्तत्कुतुके स्वदारान् [6]दत्वाप्यपारान् शुभगोपहारान् ।।4।।

तत्कौतुकं वक्तुमहं न शक्ता त्यक्ताऽधुना तेन मनोहरेण ।
तथापि लेशेन [7]मनः सुवेशे श्रीराघवेशे[8] विशति प्रसह्य ।।5।।

---

1. ०पद्मकृपया, Ujj., I.O.
2. किं वा, Ujj., I.O.
3. धर्मसुकर्म०, Ujj., I.O.
4. ०पि, Ujj., I.O.
5. सुशीला रचना विधेया, G.N.J., Pu.
6. कृ०, G.N.J., Pu.
7. वदामि शेषे, Ujj., I.O. Pu.
8. ०शोऽपि मनो ममास्ति, Ujj., I.O.

[1]कृत्वा सुपात्रे कनकस्य [2]दीपान् तत्रानुरूपान् मणिभाजनस्थान्।
[3]संप्रेरिताप्यालिजनेन सीता [4]ह्रीता न नीराजनमैच्छदस्य ।।6।।

अथ प्रवृत्ता महतः प्रयत्नाल्लज्जाभरान्नम्रतराननाब्जा।
मुक्ताक्षतान् वीक्ष्य च [5]चञ्चलाक्षी नीलाकृतीन् सा विकृतिं प्रपेदे ।।7।।

[6]दीपावलीभिः प्रियया तयाऽसौ नीराजितः श्रीजितकोटिकामः।
सुखं वितेने स्वमुखेन रामो दृशोर्भृशोरीक्षणभूरिकान्त्या ।।8।।

कृत्वा ललाटे रघुनन्दनस्य चित्रं विचित्रं वरकेसरस्य[7]।
नीराजनायाश्रितदीपमाला [8]बालाऽगमन्मोहमुदीक्ष्य वक्त्रम् ।।9।।

धृत्वा करेणैव[9] तु दीपमालां [10]व्यक्तान्तरालां वदनस्य शोभाम् ।
आलोकयन्ती [11]मिथिलेशकन्या शून्या विवेकेन मुदा तदासीत् ।।10।।

नीराजनायाः समये वदन्ती रामं समुद्दीश्य च मङ्गलानि ।
[12]सीता हसत्तत्पुनरुक्तिभावाद् भावं विदुष्या न हि कोऽपि वेद ।।11।।

क्रीडाविधिर्लोकमनोहरस्य श्रीरामचन्द्रस्य च भूसुतायाः।
श्राव्यः सुमित्रे! प्रविधाय चित्ते प्रायः समाधानमिहोत्सवाय ।।12।।

---

1. विधाय पा०, Ujj., I.O.
2. सीता प्रीता स्थिताऽधोवदनं पिधाय, G.N.J.,
   सीता प्रीता महालाभभरेण तेन, Pu.
3. दीपालिमालीप्रहिता विधातुं, G.N.J., Pu.
4. नीराजनं राममुखस्य नैच्छत्, G.N.J., Pu.
5. रामकान्त्या, G.N.J., Pu.
6. अधिकः पाठः, I.O.
7. ०रेण, Ujj., I.O.
8. ०ला श्रिया वक्त्रजया मुमोह, G.N.J., Pu.
9. तामपि, Ujj., I.O.
10. स्पष्टा० G.N.J., Pu.
11. रघुनाथपत्नी यत्नैर्दृशं स्वाचरितैर्जहार, G.N.J., Pu.
12. चकार हासं पु०, G.N.J., Pu.

मध्ये गृहं यत्र मणिप्रदीपाः कुर्वन्ति दीप्त्या परितः प्रकाशम् ।
दिव्याम्बरा कीर्णसुवर्णभीत्ति-प्रोद्यत्प्रभा व्योमतलं विशन्ति ।।13।।

[1]उल्लोचकप्रान्तनिबद्धमुक्ता[2]-मालाश्च शाला धरणीं [3]स्पृशन्त्यः।
भान्तीव भाल्यो नभसः प्रयाता अधो विधून्[4] श्वेतनृपानवाप्तुम् ।।14।।

रामाग्रभागस्थितधूपपात्र-पिधानरन्ध्राध्वन-उत्प्रयाताः।
धूमा विरेजुः परितोऽतिसीमा नाकोष्टदा( ? ) कुप्रकरा इवाशाः।।15।।

यत्रोज्जवलत्कज्जलकेतनास्ते मालां विशालां सततं पिधाय ।
स्थिता विभीता किमु भूमिबद्ध-संशुद्धरत्लोद्यतदीपवृन्दात्?।।16।।

धूपः सुरूपोऽगुरुदारुयोगादपित्तभित्तेषु[5] निवेशितो यः।
तस्यातिधूमैः परितोऽतिसीमैर्यस्याम्बरं[6] साम्बुधरं [7]किमास्ते?।।17।।

सद्भूपदीचम्पककेसराणां[8] कस्तुरिकाचन्दनकेसराणाम् ।
यत्रान्तरालाकुलितस्य किञ्चिद् गन्धस्य जालान्ययनं[9] दिशन्ति ।।18।।

तत्रातिचित्राकृतिपीठदेशे वेशश्रिया रञ्जितगेहभूमी ।
श्रीरामसीते! चरणप्रवाल[10]- सङ्गाल्लभन्ते[11] कुरुतः स्म शोभाम् ।।19।।

क्रीडा यदीया जगदुद्भवान्त-संपोषणानां रचना-विशेषाः।
सदेहमादाय करोति लीलां विवाहकाले [12]प्रिययातिचित्रम् ।।20।।

---

1. उल्लोचकं = वितानमित्यादर्शमातृकाऽभिधत्ते।
2. विमुक्तमुक्ता०, Ujj., I.O.
3. वि०, G.N.J.,
4. भून्, G.N.J.
5. अपित्तं = अग्निः, भित्तं = खण्डमित्यादर्शमातृकाऽभिधत्ते,
6. ०स्तस्याम्बरं, G.N.J., Pu.
7. सदा०, G.N.J., Pu.
8. केसराणां = मल्लिकानाम्, Ujj.
9. अयनम् = मार्गम्, Ujj.
10. ०णाम्बुजात०, G.N.J., Pu.
11. ०दलञ्चक्रतुरुत्स्मितास्ये, G.N.J., Pu
12. बलया विचित्रम्, Ujj.
    नलया विचित्रम्, I.O.

आश्रित्य पक्षं रघुनायकस्य [1]स्थिता अनेकाः कानकामलाङ्ग्यः।
तथैव दैवोदयभाजनानि[2] स्त्रियः प्रियास्याः धरणीसुतायाः।।21।।

तत्कौतुकं वीक्षितुमन्तराले शक्रो विशालेक्षणया समेतः।
आदाय दारानपि देववारा आराद्ययुस्तेऽपि[3] मधुप्रियाभिः।।22।।

भूयोऽपि भूयः परिशिक्षितापि सखीजनेनेयमुदारहासा ।
[4]नैवाकरोद् रामपदे प्रणामान् कुर्वे [5]सदेत्येव शनैर्वदन्ती ।।23।।

एकां कुरु त्वं नतिमस्य पादे पश्चादयं ते पदयोरनन्ताः[6]।
करिष्यतीत्यालि-गिरेरितेयं रामाननेऽदाद् दृशमल्पहासम् ।।24।।

सख्याः श्रुतावेवमुवाच मन्दं कुन्दप्रभाजित्वरदन्तपङ्क्तिः।
कुर्वन्तु तावत् प्रणतिं [7]पदे मे कार्या तदन्ते पदयोर्मयापि ।।25।।

श्रुत्वा सुताया जनकस्य वाक्यं रामोऽत्युदञ्चत्तरगल्लदेशम् ।
विधाय हासं शनकैरवोचत् पुराणमार्गे हृदयं प्रदेयम् ।।26।।

त्यजे पुरे ते पुरुषोत्तमाश्चेन्मार्गं पुराणं विमलं[8] स्वकीयम् ।
का वा वयस्ये रचनोद्गतानां वामासु लोकेन विचारणीया?।।27।।

आकर्ण्य वाक्यं बहुभावगर्भं भूमीभवाया रघुनायकोऽपि[9]।
गूढार्थमर्थे चतुरोऽवदत्स्वान्नाश्चर्यमेतद् गुणशालिनीषु ।।28।।

वाक्यस्य तस्य श्रवणादतीव सञ्जाततोषा हृदयान्तराले।
कर्त्तुं प्रणामं जगदीश्वराय जातोत्सवाऽभून्मिथिलेशपुत्री[10]।।29।।

---

1. तस्थुः सुमान्या निचया वधूनाम्, G.N.J., Pu.
2. ०वप्रचयाश्रयाया क्षोणीसुताया परमात्सवेन, G.N.J.
3. ०युः किञ्च मधुप्रियास्ताः, G.N.J., Pu.
4. चकार नास्याङ्घ्रियुगे प्रणामं, G.N.J., Pu.
5. सदान्तस्तमुवाच मन्दम्, G.N.J., Pu.
6. ०रनेकाः, Ujj., I.O.
7. मदीये, G.N.J., Pu.
8. सुखतः, G.N.J., Pu.
9. ०नन्दनो, Ujj., I.O.
10. ०ज्जनकस्य, G.N.J., Pu.

सखीजनेनापि कृतार्थना सा किञ्चित्स्मितोल्लासि मुखं कथञ्चित्।
समुत्थिता रामपदे प्रणामं कर्त्तुं ह्रिया नाचरदेव भूयः।।30।।

मान्याम्भोजविलोचना व्रज वचःसंप्रेरणात्क्लेशतः
कर्त्तुं रामपदे प्रणाममुदिता लज्जामिलल्लोचनम् ।
तेनाप्याशु निरीक्ष्यपादयुगलं सञ्चालितं[1] कौतुका-
त्खेदस्वेदजलाकुलालिकतला बाला किलावर्त्तत ।।31।।

तद् वीक्ष्य रामं प्रति ताः समस्ताः कोलाहलञ्चक्रुरतीन्दुवक्त्राः।
कथं लघुस्त्वं भवसि प्रकृष्ट! हाकृष्टमङ्घ्रिद्वयमत्यनिष्ट?।।32।।

कोपादथान्याऽवददेवमेनं पुरातनं त्वां कवयो वदन्ति।
इयं तु बाला कलहंसलीला शीलान्विता क्वाधिगता गताशम्?।।33।।

न वाच्यमेवं सखि! देवदेवं जानासि नास्याप्यमितं प्रभावम् ।
सीताऽतिभीताऽवददुद्भ्रमाक्षी तामेवमक्षीणमतिप्रचारा ।।34।।

रामाश्रया ऊचुरथ स्त्रियस्ताः श्रीरामधिक्कारविरूढकोपाः।
इदं परोक्तं भवतीभिरुक्तमदृष्टमप्युच्यत![2] एतदस्याः।।35।।

रामस्तथा चेन्महती कथं स्यादियं वदन्तु प्रथमं भवत्यः?।
केनाप्यलब्धं मनुजेन जन्म यतस्ततो लब्धमिहानया तत् ।।36।।

अन्यत् प्रवक्तुं स्फुरिताधरास्ताः विज्ञाय विज्ञावददेवमन्या ।
वक्तव्यमेतत् परमद्य नैतद् रामस्य वोऽहं शपथं ददामि ।।37।।

शान्तिं प्रयातः कलहः कथञ्चिन्मिथः प्रवृत्तः परमो बधूनाम् ।
कोपोदयेनापि महोदयानां यतो भवेद् वाग् रचनाजनानाम् ।।38।।

त्यागं त्रपाया यदि कोऽपि कुर्याद्[3] धैर्याम्बुराशिर्लभते तदैव ।
श्रीरामपादौ सुविचार्य सीता धृत्वा दृढं तौ शिरसा ननाम ।।39।।

---

1. दूरीकृतं लीलया खे०, G.N.J., Pu.
2. रुक्तं, न, I.O.
3. ०दासाद्य धैर्यं सकलेषु वर्यः
तस्मै च तत्पादसरोजलब्धिरब्धिर्धियः सा तरसेत्यरंसीत्।। Ujj., I.O.

स्वमौलिभूषामणिदीप्तिनीरै[1]: प्रक्षाल्य पादौ[2] हृदयोपचारैः।
संपादयन्ती रघुनाथपूजां [3]नासीच्चिरं दूरतरा ततः सा ।।40।।

संप्राप्य पादौ रघुनन्दनस्य संसारतापप्रशमस्य हेतू ।
देवाधिदेवैरपि दुर्गमान्तौ कस्त्यक्तुमिच्छेद् विधिना विहीनः?।।41।।

कृते प्रणामे जनकस्यपुत्र्यास्तत्पक्षभूता अवदन् स्त्रियस्ताः[4]।
रामः प्रणामान्[5] विदधातु सीता-पदे मुदैवाद्य यथा विधानम् ।।42।।

पृष्ठे धृतः काभिरलं सखीभिः काभिश्च पाण्योरपि पार्श्वयोः सः।
शिरःप्रदेशेऽपि च काभिराभिः कृतो नतोऽप्याकुल एव रामः।।43।।

मुञ्चन्तु मामद्य करोमि सर्वाः प्रणाममेवं प्रवदन् भयेन।
न मुक्त आभिः प्रमदाभिरेकः करोतु किं ह्रीकलितश्च रामः? ।।44।।

पञ्चप्रपञ्चाश्रयरामनाम त्वं जानकीपादयुगे प्रणामान् ।
कुर्या यदि स्याद् भवतोऽद्य मुक्तिर्बद्धस्य मुक्तेरपि दायकस्य ।।45।।

एवञ्च तासां विगतत्रपाणां सीता-सखीनामपि भूरिलज्जः।
आकर्ण्य वक्त्रं वचनं सचिन्ताभरा नतास्यो विबभूव रामः।।46।।

नाथेन तेनापि चराचराणामनाथभावो रघुनायकेन ।
अधारि भूरिश्रमवारिबिन्दु-पूर्णेन्दुवक्त्रोऽभवदद्भुतं तत् ।।47।।

आसातिहासो वदने मदीये तदा तदीयेन च कौतुकेन ।
किञ्च प्रपेदे परितोऽवकाशं चिन्ताविशेषं परिलभ्य चित्ते ।।48।।

देवैर्ऋभुक्षाः[6] सहसोऽन्तरिक्षात् [7]यक्षाधिराजानिललोकपालैः।
आगत्य रामे परितो ववर्ष हर्षप्रकर्षेण हसन् प्रसूनैः।।49।।

1. कान्तिनीरैः, Ujj.
2. भावाद्, Ujj., I.O.
3. व्याजोन्नतेर्नाभवदेव दूरे, Ujj., I.O.
4. समस्ताः, Ujj., I.O.
5. ०मं०, G.N.J., Pu.
6. ऋभुक्षाः = इन्द्रापरपर्यायः, Ujj.
7. यक्षः = कुबेरः, Ujj.

इन्द्रः सान्द्रमुदान्वितः सुरगणैः साकं विहायोङ्गणे
पश्यत्यम्बुजसम्भवो भवयुतोऽप्येनं विवाहोत्सवम् ।
कर्त्तव्या प्रणतिः कथं नतसुराधीशेन योषापदे
हा! हा! गौरवसौरवंशतिलकं[1] हित्वाऽधुना यास्यति?।।50।।

ज्ञात्वा[2] तत् स्थिरमन्तरे सुरगुरो[3] रामस्य शक्त्या तया
लज्जाकारणमुत्स्मिताकुलमुखाम्भोजान्तरालश्रिया ।
आकृष्टं चरणाम्बुजं[4] निजमिति प्रोक्ता पतिर्दैवतं
लेभे सौख्यमतिप्रसन्नवदनः कुर्याच्छिवं राघवः।।51।।

त्वामुक्तमेवं कुतुकं विवाहे रामस्य[5] किञ्चित् सखि! यत् प्रवृत्तम् ।
[6]अंशेन वक्तुं सकलं न शक्तो वेधा हि मेधानिलयो न चान्यः।।52।।

विधौ विवाहस्य गते समाप्तिं व्याप्तिं सुखानां स्वजने समस्ते ।
सम्भावयित्वा स्वजनान् जनेशो वस्त्रादिभिस्तोषमशेषमाप[7]।।53।।

उवाच सीतां जनको वदेति यद् वल्लभं पुत्रि! तवास्ति सत्यम् ।
सन्दर्शयन्ती नयनेन रामं सीता[8] निकामं विदधे सुखानि ।।54।।

[9]दायप्रदाने जनकात्मजायाः सम्भाषमाणे सचिवान्नृपाले ।
अवोचदेषा जनकं सहासा तस्याऽभवद् भूरिमुदे तदेतत् ।।55।।

---

1. ०जममुं, G.N.J., Pu.
2. ०तं, Ujj., I.O.
3. ०विभो!, G.N.J., Pu.
4. णद्वयं पतिरयं लोके परं दैवतं
   प्रोच्येत्युन्मुदितस्तथैव पुरतो हा! दृश्यते, Ujj., I.O.
   चेतसि लसद्वस्तु रामो हृदि (?) Pu.
5. श्रीरामचन्द्रस्य सखि, G.N.J., Pu.
6. लोकेऽस्ति, Ujj., I.O.
7. ०भरं स लेभे, Ujj., I.O.
8. चक्रुर्निकामं तदवेक्ष्य हासम्, G.N.J., Pu.
9. अधिकः पाठः, G.N.J., Pu.

[1]वदामि सत्यं न ममास्ति कृत्यं ततः परैस्तातवरैः पदार्थैः।
सम्पूर्णकामा त्वियमस्य रामा रामाभिधानेन मनोहरेण ।।56।।

दत्ता मणीनां जनकेन येऽद्य चेट्यः[2] सुवर्णादिविभूषिताङ्ग्यः।
दन्ताबला भूरिबलाश्च वाहा गत्या प्रवाहा विलसन्ति येषु ।।57।।

सैन्यान्यदैन्यान्यमुना बहूनि दत्तानि वित्तान्यपि रामतुष्ट्यै ।
कायो मदीयः सदय! त्वदीयः किं राघवान्यत्परमेवमुक्त्वा ।।58।।

संपालकस्त्वं जगतां त्रयाणां त्वामुक्तिरेषा पुनरुक्तिरेव ।
नत्वा वदन् स्नेहसगद्गदं तं सीतां पुना रामकरे नृपोऽदात् ।।59।।

गतिं जनानामनुरुद्धती सा सीता पितान्तान्तिकमेत्य मन्दम् ।
रुरोद् हार्द्राद् गमनस्य काले नैवं हि बाले! स च तामवोचत् ।।60।।

का वाऽनुदेया[3] तव पुत्रि! शिक्षा दक्षासि नानारचनाकलासु ।
रामः सदा पूरितसर्वकामः[4] सेव्यस्त्वयोक्त्वेति हृदा दधार ।।61।।

गृह्णातुमाज्ञां[5] जनकस्य रामं सीतासमेतं सविधं प्रयातम् ।
नामुञ्चदेनं हृदयाद् दयालुं चिरं परं तत्कुतुकं तदासीत् ।।62।।

मातापि सीतां हृदयेन धृत्वा गाढं कराभ्यां स्त्रवदस्त्रनेत्राम् ।
काचिद् विधेया सुभगे! न चिन्ता कान्ताऽसि लोकेशितुरित्यवोचत्[6] ।।63।।

किञ्चित् कृपालेशवशादशेषा ईशा दिशामप्यभवन् सुरेशाः।
तस्यास्य[7] रामस्य रमेसि रामा नामात्र कामाः सुलभाः समस्ताः ।।64।।

---

1. अधिकः पाठः, G.N.J., Pu.
2. चेट्यः = दास्यः, Ujj.
3. वा प्र०, Ujj., I.O.
4. ०भक्तकामः, Ujj. I.O.
5. गृहीतु०, Ujj., I.O.
6. ०काधिपतेर०, Pu.
7. ०पि, Pu.

मान्येषु मानः सदये! प्रदेयो रामो विधेयो हृदयान्न दूरे ।
एषैव भूषा परमा हि योषा-जने जनेशा मुनयो वदन्ति ।।65।।

निकेतनं त्वं तनुजे! गुणानां पुराणपुण्योदयसम्भवानाम् ।
व्यर्था मदीया सकला हि शिक्षा दीक्षा जनन्यामियमस्ति हार्द्रात् ।।66।।

मातर्न मे स्वामिपदप्रसादाद् दुःप्राप्यमत्रास्ति हि वस्तु किञ्चित् ।
दुःप्राप्यमास्यं युवयोर्मयेति सीता रुदन्ती विदधेऽतिखेदम् ।।67।।

नैवास्तु कस्यापि कदापि कन्या नान्या महेशास्ति मदर्थना त्वाम् ।
आलिङ्ग्य तातं क्षितिजा वदन्ती प्रोच्चैः रुदन्ती विदेधेऽस्य तापम् ।।68।।

करोति किं हा! तनुजाऽस्मदीया चिरं वसन्ती श्वसुरस्य गेहे?।
एवं कदाचिन्मनुजा अयोध्या-पुरः प्रयाता हि गवेषणीयाः।।69।।

किमुच्यते पुत्रि! वचस्त्वयेदं त्वमात्मरूपादधिकं प्रियाऽसि ।
अत्रावयोः केवलमस्ति कायस्तत्रान्तरायस्त्वयि सोऽस्तिजीवः।।70।।

एवं मदीयं शपथं गृहाण हस्तेन हस्ते सुकृतैः प्रशस्ते ।
त्वदिच्छया राघवमत्र साकं त्वयाऽऽनयिष्यामि मनोहरास्ये! ।।71।।

अम्बा प्रलम्बायतकेशपाशामाशापरामानयने पुनस्ताम् ।
सम्मार्ज्य चित्रे स्वकरेण नेत्रे क्रोडे[1] पवित्रे दृढमादधार ।।72।।

शृण्वेकमेतद् वचनं मदुक्तं यत्साधुनोक्तं मुनिना पुराणे ।
समाश्रितो येन स रामचन्द्रो नासौ सुभद्रो परमीहतेऽत्र ।।73।।

आज्ञां समासाद्य बलाज्जनन्यास्तथैव तातस्य सुहृज्जनानाम् ।
सञ्जातस्वेदेव[2] रुरोद माया रामस्य जाया नरनेययानम् ।।74।।

राजा पुण्यरथस्तदा दशरथः प्रारुह्य रौप्यं रथं
सेनासागरसंवृतोऽप्यधिगतश्रीभिः समेतः सुतैः।

---

1. क्रोडे = भुजान्तरे, Ujj.
2. ०खे०, Ujj.

साकं दारजनैश्च सुन्दरधनैः सीतादितातार्पितै-
स्सानन्दं चलितः श्रियातिकलितो देवैरपीक्ष्योऽभवत् ।।75।।

संग्रामकामः क्षितिदेवरामः क्षत्रस्य कालः सहसैव मार्गे ।
रामः प्रयातोऽद्भुतमेष जातो मूर्ध्ना नतो रामपदे किमन्यत्?।।76।।

उक्तीस्तयोः सागरयोर्बलस्य भूदेवदेवाधिप-देवयोश्च ।
त्वं सावधाना शृणु ते सुमित्रे! ये चातिचित्रेऽद्य मयोच्यमाने ।।77।।

बारम्बारमियं कृता बलवता भूमिर्मयाऽक्षत्रिया
दत्ता साऽप्यधुना द्विजाय विधिना तेजोमहाम्भोधिना ।
एतद्बीजमतोऽमिता समुदिता या कीर्त्तिरूपा लता
तद्वृद्ध्यै विदधामि राममिमितद् बालं तृणं दूरतः।।78।।

भूमीयं परमं सरः परकुलं तत्पद्मिनीमण्डलं
रामः काममसौ स्फुरत्तरकरो दुर्वारणो वारणः।
कुर्वन् तत्र विचित्रगात्रघटनैः क्रीडाभरं निर्भरं
तस्य त्वां कलयामि कोमलमलं बालं दलं केवलम् ।।79।।

विप्रक्षिप्रमुदग्रवीर्यरिपवस्ते व्रीहयः कण्डिताः
खड्गोद्यन्मुशलाग्रभागहननैः सङ्ग्रामभूम्यङ्गणे ।
प्राप्तुं निर्मलकीर्त्तितण्डुलचयं रामो निकामोज्ज्वलन्
कुर्वे सम्प्रति दूरतस्तुषमिव त्वां बाण-पक्षानिलैः।।80।।

वायुः कोऽपि निरोपितामलयशो-राशिर्धरामण्डले
स्वीयेनालघुरंहसापि सहसा व्याघूर्णितो द्विट्गिरिः।
रामस्याद्भुतविक्रमस्य चरतो रेणोरणोर्यः कणो
नेतुं तं च दिगन्तराल[1]कुहरे को रे हतारेः श्रमः?।।81।।

रामे जाग्रति भोजनाय जगति प्रत्यर्थिनो धावति
हन्तुं मन्तुभरातिलोहितदृशि प्रोद्यत् शरीरत्विषि ।
कालेऽस्मिन् पवनाशने प्रविलसद् भीमानने सन्निधौ
नायं यास्यति वायुरायुरधुना [2]जायुर्भवेद् ब्रूहि तम् ।।82।।

---

1. ०न्त०, Ujj.
2. जायुर्जीवनौषधमित्यादर्शमातृकाऽभिधत्ते।

दग्धं येन घनं महारिपुवनं भीमं क्षणेनाखिलं
त्रैलोक्ये विदितामितोद्यतबलेनालं महाबाहुना ।
यस्याग्नेर्मम रामधामजलधेः पत्रस्य शुष्काकृते-
स्त्वद्रूपस्य नितान्तभस्मकरणे किं स्याद् विलम्बोऽधुना? ।।83।।

रे रे वीरवरे! हतारिनिकरे क्रूरेषु धाराधरे
सानन्दध्वनिनादिताखिलदिशादेशान्तरे दुर्द्धरे ।
रामे सर्वधराधरेन्द्रकुहरेष्वस्मिन् परे वर्षति
क्वास्याग्रे भवतो भविष्यति वद स्थाने क्षणं वा स्थितिः? ।।84।।

सत्यं राम! वदामि नैव च कदाप्युक्तं मयात्रानृतं
जानीहि त्वमुमुं कृतान्तविषमं कामं रणस्याङ्गणे ।
तस्याप्यस्य मनोज्ञनोदितरुचौ त्वय्यद्य बालाकृतौ
कारुण्यं समुदेति किं पुनरहो कार्यं त्वमेतद् वद ।।85।।

कालेऽस्मिन् परिभूतशात्रवकुले व्यालेति कोपोज्ज्वलो
बालोऽप्याकलनागतोद्धतबलः किं दुष्टशीलोच्यते?।
शक्तिश्चेत्तव योद्धुमिद्धमहसा साकं मया तत्त्वया
शस्त्रं पाणितले विधेयमधुना नो कार्यमाभाषणैः।।86।।

हा! रे! दाशरथेस्त्वयातिविततता किं नो प्रतिज्ञा श्रुता
योऽयं नैव शरं करोति समरे शत्रौ द्वितीयं करे ।
प्राप्तं कालमुखं तनोति च सुखं दैवात्कदाचित्पुन-
र्नेदं रामकरप्रणोदितशरस्यालोकनं दूरतः।।87।।

कुर्याच्चेत्तव रक्षणं क्षणमिह ब्राह्मण्यमुद्यत्तरं
रामात्तत्त्वयि दृश्यते न हि किमप्याचारशून्येऽधुना ।
जातिर्यापि नतां रता अतिरणे शूरा न रामान्वते
जाने जीवनकारणं न मरणं तद्वै तवाद्यागतम् ।।88।।

शत्रोस्ते पुरतोऽपि कोमलगिरा नो कार्यमेवाधुना
नूनं रामपथा प्रयाति परमं जिह्वाञ्चलोऽयं श्रमम् ।
शक्त्या द्रष्टुमिमे कदापि विषमे कल्पान्तकालक्रमे
सूर्याः कोटिमितावलोकमहिता धारा कुठाराश्रयाः ।।89।।

नानल्पं कुरु जल्पनं खलगुरो! शौर्यं पुरो दर्शय
नो कुत्राप्यवलोकितो बलवतो वाचामयं सञ्चयः।
अद्य प्रोद्यतविक्रमस्य मम तत् त्वं पौरुषं लोकय
नो दृष्टं न पुरा श्रुतं न भविता चाग्रे त्रिलोक्यां क्वचित् ।।90।।

पारो यस्य न विद्यते परतरस्सारोदयस्यामरो
गर्जद्दुर्जनतर्जनोद्यतकरो दिक्कुञ्जरोऽद्यान्तिके ।
आयातः क्षुधितः कथं व्रजति वा सोऽयं चिरं जीवितं
[1]फुल्लज्झल्लकसल्लकी-क्षितिरुहो राम! त्वमेतद् वद ।।91।।

यस्यायं प्रथितः पिता दशरथो माता प्रजाताग्रणीः
कौशल्या यमजीजनद् घनयशःकोशो विशेषोदयम् ।
तस्य द्वेषिगजव्रजप्रदलनप्रख्यातसारस्य मे·
रामस्यास्य हरेर्गतोऽसि पुरतो नैव स्वतो मुक्तिभाक् ।।92।।

रामस्थामपराङ्मुखा अपि सुखासक्तास्त्वया सन्निभाः
संप्राप्ता अतिभीषणस्य परशोर्धारान्तिकं दैवतः।
स्वीयेनैव करेण दीप्तिनिकरेणाशान्तरे स्थापिताः
प्रेम्णा तस्य यशो-रसालमहसो नाशो विधेयः कथम्?।।93।।

सत्यं कीदृशमेतदुज्ज्वलकुले जातेन तेनोच्यते
नान्यो मत्सदृशः कदापि च दृशः कस्याप्यभूद् गोचरः।
इच्छा चेत्तव लोकनेऽद्य सदने त्वं गच्छ गच्छावने-
स्त्रातुर्ब्रह्मपितुः सतोऽस्य [2]सवितुः किञ्चावितुः श्रीशितुः।।94।।

श्रुत्वैतद् वचनं प्रगल्भरचनां श्रीरामचन्द्रोदितं
शस्त्राण्यस्य पुरस्त्यजन् स सकलान्युत्सन्नलज्जाभरः।
ब्रह्माकारविचारसारहृदयो दृग्वारिधाराभया-
न्मुञ्चन् श्रीचरणाब्जयोरतिनतः पाहीत्यमुं चावदत् ।।95।।

---

1. फुल्लक्षु०, Ujj.
2. दुहि०, I.O.

एवं प्रवादे महति प्रवृत्ते वृत्तेन[1] तेनाप्यमितप्रभाभिः।
नायं [2]मनुष्याखिलवश्यवश्यो यो वेदशस्यो भगवानितीतम्।।96।।

ततोऽगमद् भार्गववंशजातो रामो विरामं महसामवाप्य ।
वदन् गुणान् बाहुयुगस्य तस्य श्रीरामचन्द्रस्य पथि प्रतीतान् ।।97।।

मुदमसावगमत् सुकृतीं परां दशरथः परिलब्धमनोरथः।
निजजनैस्तनुजैः सह पौरुषं रघुपतेरवलोक्य महत्तरम् ।।98।।

चक्रे क्षितीशः प्रणतीः पदाब्जे रामस्य रामाद्भुतविक्रमस्य ।
वदन् गिरा सर्वसुराधिराजः सोऽयं हरिः प्रेमजलाकुलाक्षः।।99।।

आदाय तेषामिव जीवसंधान्[3] श्रीरामचन्द्रः[4] प्रियया समेतः।
लोकेषु शोकाकुलितेषु तेषु वैक्लव्यमासीत् सकलेषु भूरि[5]।।100।।

[6]चित्रं शृणुष्वापरमेकमेतद् वियोगतः श्रीरघुनन्दनस्य ।
अभूत् क्षणं विस्मृदेहगेहः प्रिये! विदेहस्त्वतिलब्धमोहः।।101।।

[7]एकत्र सीता रघुवंशकेतू विरेजतुस्तौ शिविकान्तराले ।
अन्योन्यशोभा-रचनाप्रचारं विलोकयन्तौ विगतोपमानौ ।।102।।

सीतासमेतः शिविकान्तराले कृतोपवेशो रघुवंशदीपः।
विलोकितो मे तनुतेस्म तोषं यस्यातिशेषं न चितो बभाषे ।।103।।

[8]यदैव रामः सह सीतयाऽसौ पुरीमयोध्यामगमत्स्वकीयाम् ।
अनन्तसेनापरिजुष्टपृष्ठः शोभां प्रवक्तुं प्रभवेद् वशिष्ठः।।104।।

---

1. वृत्तेन = आचारेण, Ujj.
2. मनुष्योऽ०, Ujj.
3. ०मग्रे, Ujj., I.O.
4. रामः सरामः पुरतः प्रयातः, G.N.J., Pu.
5. यस्मात्, G.N.J., Pu.
6. अधिकः पाठः, Ujj., I.O.
7. अधिकः पाठः, G.N.J., Pu.
8. यदा त्रिलोकीतिलकः प्रविष्टः श्रीरामचन्द्रो नगरीं जनेष्टः।
अनन्तसेनापरिजुष्टपृष्ठः ख्यातौ श्रियोऽस्य प्रभवेद् वशिष्टः।। – इति पाठान्तरम् I.O.

श्रीरामविश्लेषहुताशकील-समागमव्याकुलया कथञ्चित् ।
प्रोक्ता मयेयं रघुनाथवार्त्ता मूर्त्ता सुधासिन्धुरिवातुराणाम् ।।105।।

संचिन्तयन्ती रघुनाथमेवमखण्डमेषा रघुनाथमाता ।
जगत्समस्तं रघुनाथरूपमपश्यदत्रास्ति न चित्रलेशः।।106।।

कलयति कुलमेतच्छन्दसा नास्यभावं
भवजलनिधिनावं यत्पदं संवदन्ति ।
अगणितगुणपारा यस्य सारान्तमेते
नहि विदुरपि देवा राममेवाश्रयामः।।107।।

प्रतापशाहार्पितगौरवेण येनाप्यमानि त्रिदिवस्तृणाभः।
मुरारिनानेन[1] समस्तमेतत् संन्यस्य काश्यामितमात्मरूपम् ।।108।।

येनाकारि विचारि मानसमनोहारी कथासागरो
ग्रन्थोऽग्रन्थि मतेः प्रतापृपतेरादेशतः पूर्वतः
काव्यानामपि यत्त्रयं गुणमयं श्रीरामनामाश्रयं
काश्यामद्य जयत्ययस्य निलयः सोऽद्वैतनामा यतिः।।109।।

अयुतद्वयमानोऽपि[2] कथासागरसंज्ञकः।
कृतो ग्रन्थस्तथानेन रचिता भक्तिचन्द्रिका ।।110।।

अद्वैत एवं[3] गुरुणास्य नाम कृतं कृपातः करुणामयेन ।
यत्पादकासारजनिप्रसाद-सञ्जातशक्तिः कुरुतेऽस्म काव्यम् ।।111।।

तद् द्वैतमद्वैतयतौ विभाति यच्चेतसा प्रेमरसाकुलोऽसौ ।
सदा मुदा श्रीगुरुपादपद्मं सद्मश्रियो ध्यानपदं करोति ।।112।।

काश्यां दैवतदीर्घिकामलजलस्नानप्रतानार्जितै-
र्निःसीमैः सुकृतैः कृतार्थजननः श्रीरामसेवाधनः।
ब्रह्मानन्दसमुद्रसान्द्रलहरी दूरीकृतद्वैतधी-
राश्चर्यं जनतासु तासु रचयन्नायुर्नयाम्युत्तरम् ।।113।।

---

1. तेन, Ujj.,
2. ०नस्तु, G.N.J., Pu.
3. ०मेवं, G.N.J., Pu.

नासत्यभूतैर्मम कृत्यमेतैरर्थैः परार्थैकरसस्य किञ्चित् ।
किन्तूपजीव्यौ सुरराजसेव्यौ भव्यातिभव्यौ रघुनाथपादौ ।।114।।

नैतन्मनो गच्छति न प्रयाति क्वापि क्षणं नैव च तिष्ठतीदम् ।
चिन्तां रघूत्तंसपदाम्बुजस्य कुर्वन् पुनर्मज्जति चात्र चित्रम् ।।115।।

कुत्रापि केषां रमतामखण्डं चेतोपदण्डं विषये जनानाम् ।
वयं तु जाताः सुकृतेन सीता-पतिप्रतीताङ्घ्रिनिमग्नचित्ताः ।।116।।

कुत्रापि पुत्रा न सुखाय मित्राण्यन्तःकलत्राणि च पुत्रपुत्राः ।
गेहानि चित्राण्युचितानि पत्राण्यन्यत्सुमित्रातनयातिमित्रात् ।।117।।

मूढगूढपदशात्रवासने! वासनेषदपि तावकी भवेत् ।
वर्त्तते न[1] समवर्त्तिनोदरः पामरः स्मरशरोदितः कुतः? ।।118।।

केचित् सन्तु दिगम्बरा यतिवराः केचिद् धराशायिनः
केचिन्मौनपराः श्रितान्तकुहरास्तद्ध्यानधाराधराः ।
जानेऽहं तु निरस्तमन्तुनिचया एकं निदानं परं
पारं गन्तुममुष्य संसृतिसरिन्नाथस्य रामस्मृतिम् ।।119।।

येनोद्धृता दुःखपयोधिमध्यात् पत्नीमुनेर्धूलिवरैरहल्या ।
नाहं विना तं रघुनाथपादं चित्तेऽस्तखेदं कलये कदापि ।।120।।

संप्रार्थये त्वां रघुनाथनाथमनेकवारं पुरतो निपत्य ।
भक्तिर्दृढा पादयुगेऽनुगस्य देयाऽभिलाषो न परो स्पृहस्य ।।121।।

त्यक्त्वा कतृणवत्प्रपञ्चमखिलं योगीश्वरैर्दुस्त्यजं
चिन्ताजालपराङ्मुखः सुखयुतस्तिष्ठन् पुरे शाङ्करे ।
जल्पन् दाशरथेर्दशाननरिपोः सीतेश! रामेत्यलं
कालं यो नयति प्रकृष्टनियतिः कोऽद्वैतभिक्षोः परः? ।।122।।

अस्ति स्वस्ति-समर्जने यदि तवाकाङ्क्षा विपक्षान्तिकं-
मागच्छाशु च गच्छ दूरमपि रे! कालातिकालाकृतिः ।

---

1. वर्त्तनेन, G.N.J., Pu.

दृष्टिं दुष्टभयप्रदां च परितः कोपावृतो भ्रामयन्
कृत्वा चापमधिज्यमात्तविशिखो रामो भ्रमत्यन्तिके ।।123।।

पाशानां शतमेतदन्तककरे दण्डाः प्रचण्डा इमे
शस्त्राणामपि यश्चयः प्रतिभया दूताश्च भूतावृताः।
त्याज्यं सर्वमिदं वदन्तममलं श्रीरामनाम स्फुटं
द्रष्टुं नापि च शक्तिरस्ति भवतः स्प्रष्टुं पुनः सा कुतः?।।124।।

दासानुदासे मयि राघवेदं कृतं त्वया सर्वमपूर्वमेव ।
नातोऽवशिष्टं[1] किमपि प्रकृष्टं प्रेष्ठं किलैकं मरणे स्मृतिस्ते ।।125।।

रामं श्यामसरोजसुन्दररुचिं हास्यं प्रशस्याननं
विद्युद्वाससमञ्जि-तेजसमिषुं चापं दधानं करे ।
सीतालक्ष्मणसंयुतं हनुमता संसेवितं पादयो-
श्चित्ते चिन्तयतो भवन्तु हि मम प्राणाः प्रयाणोन्मुखाः।।126।।

राम! क्षीणबलेऽखिलेन्द्रियकुले गाङ्गेऽमलेऽस्मिन् जले
काले प्राणविनिर्गमस्य शयितस्त्वामेव संचिन्तयन् ।
हासोल्लासि मुखः प्रवर्द्धितसुखः श्रीकण्ठकण्ठोदित-
श्रीरामाक्षरमन्त्रचिन्तनचितोल्लासः कदा स्यामहम्? ।।127।।

आयाता प्रथमं ससम्भ्रमममुं दण्डैः प्रचण्डैर्युता
दूता ये यमिता यमेन यमिना भीमेन भीमाननाः।
पश्चात् सुप्तमुदीक्ष्य गाङ्गसलिले श्रीरामनामावलिं
जल्पन्तं च शनैः कदातुरतरा यास्यन्त्यधः कन्धराः?।।128।।

श्यामाम्भोऽन्तरतः सुपर्वसरितः श्रीरामचिन्तारतः
शक्तेः संक्षयतः शनैश्च परितः संलोकयन् विस्मृतः।
किञ्चिद् वायुविलोलमञ्जुलजलप्रत्युत्थभङ्गावली
संश्लेषा कुचचञ्चलाक्षियुगलः प्राणप्रयाणेऽचलः।।129।।

---

1. ०वरि०, Ujj.

लोकानां मरणोत्सवो रघुपते! नित्यं मयालोक्यते
प्रीत्युत्फुल्लविलोचनाम्बुजयुगे नालं पुरे शाङ्करे ।
एवं देवदयोदयेन पदयोः सन्तोऽप्यनन्तोत्सवं
यास्यन्त्यत्र पवित्रगात्रविलयं दृष्ट्वा मदीयं कदा?।। 130।।

आराधिते येन पदारविन्दे सर्वप्रदे मैथिलजाधिपस्य ।
तस्यात्र किं भाग्यवतोस्त्यगम्यं यच्चातिरम्यं भुवनत्रयेऽपि ।।131।।

नैवास्ति पुत्रे न कदापि मित्रे नो वै कलत्रे न विचित्र-पत्रे ।
मन्मानसं नीरजपत्रनेत्रे सीताकलत्रे जगतां पवित्रे ।।132।।

आनन्द-आनन्दकलेवरस्य विचित्रलावण्यकलाकुलस्य।
सञ्जायते ध्यानवशादमुष्य वाच्यो भवेत् केन लवोऽपि तस्य?।।133।।

सम्मोचितो ग्राहमुखाद् गजेन्द्रो मां पाहि रामेति सकृत् स्मरन् सः।
श्रीरामरामेति वदन् सदैव नो देवदेवानुररीकरोषि ।।134।।

विलोक्य लोकान् मणिकर्णिकायां प्राणान् पयोन्ते त्यजतोऽतिधन्यान् ।
मूर्खं मनो वाञ्छति तत् स्थितिं मे रामातिरामस्य किमाचरामि? ।।135।।

आयुःक्षये संक्षयमाकृतेर्मे करिष्यतीहैव स रामचन्द्रः।
विधीयते सान्त्वनमेवमस्य श्रीराम! नैतत् समुपैति धैर्यम्।।136।।

तद्दीनवत्सलसुपूरितभक्तकाम!
राम! प्रपन्नवचनं शृणु किञ्चिदेकम्।
एवं कुरु स्मृतगुरुप्रपदं हृदन्ते
शीघ्रं गतासुममले कमले द्युनद्याः।।137।।

भागीरथी-निर्मलनीरमध्ये मेध्यातिमेध्ये सुकृतेन सुप्तः।
ध्यानन् हृदा रामपदं सरागं त्यागं कदाहं वपुषः करिष्ये?।।138।।

धूतं पूर्वमपूर्वगाङ्गसलिलैस्तीरे सुमित्रैः पुन-
र्धृत्वा बाहुयुगेन मस्तकपदे नीतञ्च गङ्गान्तरे ।
कुर्वद्भिः स्मरणं हरेः श्रुतियुगे प्रेम्णाम्बुधैर्वीक्षितं
मन्दं राघवराघवेति जपतः स्यान्मे शरीरं व्यसुः।।139।।

अन्ते यदि स्यान्मम सन्निपातः श्रीराम! पूर्वार्जितकर्मयोगात् ।
[1]श्रमातुरस्यापि मुखादुदेतु श्रीराम-रामेति वचः प्रचारः।।140।।

जले गाङ्गे स्नानं तदनु हरपूजाविरचनं
ततो देवस्थाने क्षणमपि तदाख्यानकथनम् ।
पुनः साकं सद्भिर्विकसितमुखाब्जं च हसनं
यदि स्यान्मे नित्यं मधुमथन! लोके किमधिकम्?।।141।।

विहाय लज्जां परमोत्सवेन प्रोच्चैर्वदन् राघव-राघवेति ।
क्रीडामि काश्यां सुरसिन्धुनीरे तीरे वसन् कोऽपि च पुण्यपाकः।।142।।

तातस्तु रामो जननी च रामो भ्रातापि रामो भगिनी च रामः।
मित्रञ्च रामः सकलञ्च रामो रामात् परं नो मम किञ्चिदस्ति ।।143।।

देवा मनुष्याः पशवः पतङ्गा नागाः नगाः कुण्डलिनस्तुरङ्गाः।
सर्वं चरं चाचरमेव रामो रामं विना मे न विभाति किञ्चित् ।।144।।

पातालेऽपि तले भूम्या अन्तराले दिशामपि ।
पश्यामि सर्वतो रामं मेघश्यामं मनोरमम् ।।145।।

पश्यामि सर्वं रघुनाथरूपं रूपं नराणामपि किन्नराणाम् ।
देहान् विदेहाङ्गजया समानान् नानाङ्गनानामपि लोकयामि ।।146।।

वैद्योऽतिवन्द्यो जगतां ममास्ति स्वस्तिप्रदः श्रीरघुनाथ एव ।
क्वाथोऽप्यनाथस्य तदीयतीर्थं सार्थं भवेज्जन्म यतो जनस्य ।।147।।

यद्गात्रसङ्गात् परमं पवित्रं सच्चन्दनं तत्सरसं रसो मे ।
वदामि तथ्यं च मदीयपथ्यं केला किलैलातनुजाधिपस्य ।।148।।

देहं मदीयं भवतिस्म गेहं पुरा परं रोगपरम्पराणाम् ।
तत्ताभिरद्येश्वर! राम! मुक्तं व्यक्तं महत्त्वं पदयोरिदं तत् ।।149।।

कदापि नो यातु मनो मदीयं राम! त्वदीयं चरणं विहाय ।
जाता यतस्तोषसमुद्रमग्ना ये केऽपि लग्ना हृदयेन किञ्चित् ।।150।।

---

1. भ्र०, Ujj.

क्वायं प्रभो राम! विमूढबुद्धिः किञ्चासमृद्धिः स्वहितेष्वशक्तः।
निरन्तरं स्वीयजनेऽतिकोपी सोऽपि त्वया भक्तिविधौ नियुक्तः।।151।।

अर्हते महते राम! देयं हनुमतेऽखिलम् ।
कनिष्ठायाप्यनिष्ठा( मे ) मह्यमेकं पदोर्युगम् ।।152।।

ज्येष्ठा राम! भवन्त्विमे पवनजाः श्रेष्ठा गुणानां गणैः
प्रेष्ठास्सर्वसमर्पणाय भवतः शक्त्यातिभक्त्यापि च।
प्राणानां निचयेपि नैव पदयोर्युग्मं त्वदीयं मया
देयं देव! निमेषमात्रमपि तद् यत्किञ्चिदीशाचर ।।153।।

आकर्ण्य दीनं वचनं मदीयं व्रजेदचेतो हृदयं विदारम् ।
कृपा कृपालोर्हृदि राम! किञ्चिन्नोदेत्यवृत्तं तदिह प्रवृत्तम् ।।154।।

पशुर्गजेन्द्रो विपिनान्तरस्थो मूढः समारूढ इतः पदं तत् ।
अयं मनुष्यस्तव राम! पोष्यः प्रेष्यश्च नो खिन्नमना उपेक्ष्यः।।155।।

दूरात्ते पदयोऽस्तु राघव! नतिः क्वत्या रतिः सेवने
स्मृत्वा तच्चरितं प्रयाति विततं कम्पं सशङ्कं मनः।
शुद्धायाः सुरसिन्धुनीरनिकरादप्यन्तरा पावकं
त्यक्ता भूमिभवा प्रियापि च दयाशून्येन माया त्वया?।।156।।

अदयं राम! हृदयं त्वदीयं वेद्म्यसंशयम् ।
दिव्यं नीताप्यहो! सीता वने त्यक्ता पतिव्रता ।।157।।

अतो भविष्यति मयि दयायाश्च लवस्त्वयि ।
कुतो दीनतरे राम! नरे पापपरे पुनः।।158।।

अहं त्वद्वैरिणो त्राता नाहं स्त्री न च वानरः।
नाहं शूद्रः कुतो राम! ब्राह्मणे मयि ते दया ? ।।159।।

इति करणवचस्त्रग्जातसंतोषपूरो
जनकनृपतनूजास्कन्धदेशास्तहस्तः ।
स्मितविकचरदोद्यद्-दीप्तिसंपूरिताशो
वरद इति वदन् स स्पष्टतामाप रामः।।160।।

आकर्ण्येति वचांसि तस्य बहुधा दीनानि दीनेश्वरः
स्पष्टाह्लादभरः स्मितातिरुचिरः प्रेमप्रपूर्णान्तरः।
कीशेशाग्रसरप्रकल्पितकरः कोटिस्मरश्रीधरः
सद्यः प्रादुरभूद् विभूतिभवनं रामः सरामानुजः।।161।।

यत्पादाम्बुजयुग्मवीक्षणसमुद्भूतक्षणक्षालित-
स्वान्तप्रान्तनिविष्टकष्टनिचयं प्रेमस्त्रवद् दृग्जलम् ।
एवं स्वेन भुजद्वयेन मृदुना शीतेन शीतादपि
प्रेम्णा वक्षसि सन्दधे सुतमिव श्रीरामचन्द्रोऽप्यलम् ।।162।।

श्रान्तोऽसि प्रियबालबालकलनाभीतिप्रतीतिः कुत-
स्त्वद्देहे वितितेयमिन्दुविमला हृद्वासना निश्चला ।
किं चातोऽप्यधिकं मनस्तव भव-प्रध्वंसने मामके
संसक्तं चरणे भवष्यिति वचोऽप्यूचे सुधासन्निभम् ।।163।।

आलिङ्गितोऽसौ जनकस्य पुत्र्या पुत्राधिकस्नेहभरेण दासः।
तत्याज तापं सकलागजातं लेभेऽप्यभेदे कमपि प्रतोषम् ।।164।।

अथोल्लसत्प्रेमभरैः परीता सीता प्रतीताशयमाबभाषे ।
त्वत्तो लवः पेलव एव पुत्रो ज्येष्ठादपि त्वं तनुजाद् वरिष्ठः।।165।।

अङ्केऽतिरङ्कोऽपि जगज्जनन्या निवेशितो गौरवतः स्वकीये ।
किञ्चामलेनाम्बरपल्लवेन तस्याश्रुबिन्दून् परितो समार्ज्यः ।।166।।

तयोर्नतः पादयुगेऽनुगोऽयमनन्तसन्तोषसमाकुलाङ्गः।
सगद्गदं किञ्चिदुवाच मन्दं प्रेमाश्रुधारापरिसिक्ततुन्दम् ।।167।।

(भक्तोऽप्येष) तदातिगद्गदवचास्त्यक्तः शुचा सर्वथा
यास्यामीति वदन् रुदंश्च परमप्रेम्णा मुहुर्बालवत्।
कुर्वन् बाहुयुगं तदीयमुरसः स्वीयात्सुदूरे बलात्
रामस्यातिमुदं ततान स तथा दासे दयावारिधेः।।168।।

रामाभिधानं तव चिन्निधानं प्रायः प्रधानां परमार्थलाभे ।
श्रेयोनिधानं सुखसंनिधानं जिह्वासमानं पठनं करोतु ।।169।।

सन्त्येव काष्ठापतयो वरिष्ठा देवा जनेष्टा बहवस्तथापि ।
साकेतपाले परिशुद्धशीले हृन्मेऽब्दनीले महसि प्रसक्तम् ।।170।।

त्वामर्थये राघव! किञ्चिदेकं यस्याप्यनेकं प्रथितं महत्त्वम् ।
अयं भवत्च्छ्रीपदमात्रपक्षो नोपेक्षणीयो वपुषो वियोगे ।।171।।

नान्तरं वायु-पुत्रस्य देवाद्वैतयतेरपि ।
महदेवान्तरं कान्ते! वानरस्य नरस्य च ।।172।।

अहो! गुहोपीह गुहोदरेषु तपो स्पृहो नैव रहो वितेने ।
दत्तस्त्वयाऽस्मै रघुनाथ! मोक्षः कथं न पक्षस्तव दीनलोके ?।।173।।

भक्तिर्यदीया रधुनाथपादे संसारखेदेन स मुक्त एव ।
किञ्चाखिलं पूर्वकुलं स्वकीयं तेनोद्धृतं कालकरालवक्त्रात् ।।174।।

मन्मानसं राम! षडङ्घ्रिरेष प्रायो विशेषं न रसेषु वेत्ति ।
भ्रमत्यखण्डं कुरु लीनमेनं त्वत्पादराजीव-रसग्रहेषु ।।175।।

दत्तं त्वया यद् रघुनाथ! मह्यं न ह्यन्तरे तज्जगतोऽपि कस्मै ।
न्यासो निवासो मनसोङ्घ्रियुग्मे स्थितिस्त्वयुग्मेक्षणपत्तनान्ते ।।176।।

अनाथकरुणासिन्धु र्दीनबन्धुः स राघवः।
सहसा महसा पूर्णस्तूर्णमावीरभूद् विभुः।।177।।

दुष्कृतं च सुकृतं सकलं मे राम! नाशय ततः सुखमुच्चैः।
लोहजा रुचिरकाञ्चनजा वा श्रृङ्खलाङ्घ्रिनिहिता [1]महिताय ।।178।।

या संसक्तेऽप्यनासक्ता त्यक्ताऽव्यक्ताशयाङ्गना ।
अनासक्ते तु यासक्ता रक्ता मुक्ताविहास्पृहाः ।।179।।

मुक्त्यङ्गनालिङ्गनलालसेन प्रायोऽलसेनाखिलकर्मजालैः।
श्रीजानकीनायकपादपद्मे चेतो निधाय क्रियते समाधिः।।180।।

---

1. न, I.O.

न मुक्तिरधुना दूरे धीरे रामस्मृतौ पुनः।
क्रीडां गाङ्गे सदोत्सङ्गे चित्तरङ्गेण कुर्वति ।।181।।

प्रेम्णा विशुद्धहृदयेन मयाल्पकेन सङ्कल्पितैः पदसरोरुहयोरनल्पैः।
हीनैरपि प्रियगुणैः कविता-प्रसूनैः प्रीतिं प्रयातु करुणानिधिरेष रामः।।182।।

पापभारं कुतः स्फारं वारं वारं वहस्यरम् ।
एकवारं श्रुतेः सारं नाम रामस्य कीर्त्तय ।।183।।

अद्वैतनामाद्य विहाय कामान् करोति काश्यामनिशं निवासम् ।
यद्वाक्यपीयूषरसेन सिक्ताः श्रमैर्विमुक्ता जनता भवन्ति ।।184।।

देयं मया किं रसने! भवत्यै या रामनुत्यै सततं प्रवृत्ता ।
मातः कृतोऽयं सुकृतस्य पात्रं जाता बहित्रं च भवाम्बुराशौ ।।185।।

क्रोधो यास्यति चेत् प्रयातु जननि! स्यात्तेन किं मेऽधुना
नाहं राममम़ुं श्रयामि विषमं दीनातिहीनेऽपि च ।
एतद्वाक्यसुधास्मृतिरसस्वान्तं स्वकान्ताननं
पश्यन्ती सहसा पुनस्तमुरसा दध्रे धरानन्दिनी ।।186।।

नोपकारः परो जिह्वे! विस्मर्त्तव्यस्तवानघे! ।
उत्तारितो भवाम्भोधेरयं रामेति कीर्त्तनात् ।।187।।

अमरत्वं फलं दृष्टं दिष्ट्या रामस्मृतेस्तव ।
एतत्तु कुरुते काश्यां परं चिन्ताभरं मम ।।188।।

वाराणस्यां शिवस्याने मानसाख्ये सरोवरे ।
अद्वैतेन कृतं काव्यं सीताकान्तवियोगतः ।।189।।

[1]यस्य सीता स्थिता वामे दक्षिणे लक्ष्मणः सदा ।
पुरतस्तनयो वायोः प्रायोऽयं जीवनं मम ।।190।।

---

1. अधिकः पाठः, Ujj., Pu.

[1]सीता स्थिता यस्य च वामभागे नागेश्वरो दक्षिणतस्सदैव ।
पुरः प्रदेशे पवनस्य सूनुर्नूनं मनो मे रघुनन्दनेऽस्मिन् ।।191।।

तुष्टिं प्रयातु भगवान् यत एव सृष्टिः
किञ्चानुकृष्टिरपि पुष्टिरमोघदृष्टिः।
व्यष्टिः समष्टिरतिदुष्टजनान् पिनष्टि
श्रीपद्मवृष्टिभिरसौ रघुवंशदीपः।।192।।

*इतिश्रीराघवोल्लासे महाकाव्ये परमहंसपरिव्राजकाचार्यवर्यदिगम्बर-श्रीरामकृष्णाश्रमभगवत्पूज्यपादशिष्याद्वैतविरचिते 'रघुनाथायोध्याप्रवेशो' नाम द्वादशः सर्गः।।*



1. अधिकः पाठः, Ujj., Pu.

## परिशिष्टम्

### राघवोल्लासे सुभाषितानि

पुण्यतः प्राप्यते साधुर्येन सिन्धुर्भवाभिधः।
तीर्यते जन्तुभिः सर्वैरितत्पूर्वैरपीरितम्॥

तदेव केवलं नेत्रं पवित्रं प्राणिनामिह।
कदापि जायते यस्य गोचरोऽनुचरो हरेः॥1/36-37॥

तप्तानामिह सन्तापै र्भवदावसमुद्भवैः।
साधोरेवास्ति विश्रान्तिः शान्तिश्चापि हृदःपरा ॥

अपारे पथि संसारे सञ्चारेण श्रमातुरैः।
लभन्ते साधवः कैश्चिद् गुरवस्तरवः शिवाः॥

ब्रह्मणामिह शिष्टानां नान्तरं दृश्यते स्फुटम्।
कल्याणं चिन्त्यते याभ्यामपूर्वं जगतामलम्॥

पवित्रानपवित्रान् ये सङ्गमनात्प्रकुर्वते।
दुष्टाः विष्टासमाकाराः दूरात् त्याज्याः शरीरिभिः ॥

कफस्यापि च रेफस्य समाना दृश्यते स्थितिः।
नायाति शान्तिर्मधुरैर्विधुरैरेव शाम्यति॥

पुरीषं पुरुषो ज्ञेयो नानुनेयो दृशाप्यसौ।
उत्पन्नो जठरान्मातुः रामं जातु न यः स्मरेत्॥

नेक्षणीयं मुखं तत्तु रामनामपराङ्मुखम्।
जायते च यतो दुःखं सुखं नश्यति चोन्मुखम्॥1/39-45॥

सर्वतः पर्वताकारा अपि सन्त्वंहसाम्भराः।
का नो भीतिः स्मृतिर्विष्णोर्वज्रवन्मानसे यदि ॥

सत्यं वदामि रसने! व्यसनेष्वनिशं रते!।
कुरु रामाक्षरोद्घोषं नो चेद्दोषं वदाम्यहम्।।1/54-55।।

मूर्खस्यापि मनः सद्यः करुणारससीकरैः।
सेचनादार्द्रतां याति ततस्तस्यैव कीर्त्तनम्।।1/56।।

धिक् तं नरं लोकवरं विहाय रामं परं दैन्यहरं करं यः।
करोति किञ्चिद् विततञ्च किञ्चित्द्युक्तं वरे प्राणहरेऽपि काले।।1/102।।

लक्ष्मीमदोन्मत्तसदःप्रयाणात्प्राणप्रयाणं वरमेव मन्ये।
नो तत्र लब्धिर्व्यसनावलीनामन्यत्र राम! प्रचुरत्वमस्याः ।।1/113।।

जानकी जननि! मे जनकोऽयं नार्थ्यते मम कृते कथमेषः?।
प्रायशो नरवरा हि धरायां सम्प्रयान्ति वशतां वनितानाम् ।।1/122।।

नालस्यं पाकरणे रामास्ति मम सर्वदा।
नालस्यं पापहरणे तवास्य शरणेऽपि च।।1/151।।

इन्द्रोऽप्यतन्द्रो यदि वर्षपूगान्करोतु तीव्राचरणैस्तपांसि।
प्राप्तुं न शक्यानि तथापि तेन सत्सङ्गपुण्यानि सखे! रजांसि।।2/6।।

पापजातं व्रजेदन्तं कृतं यच्चेतसि क्षणम्।
अस्तु स्वस्तिकरं ब्राह्मं तत्पदं विपदन्तकृत्।।

विग्रहे जायते यस्य द्विजाङ्घ्रिरजसो ग्रहः।
न ग्रहास्तं प्रबाधन्ते विग्रहा अपि सैनिकैः ।।

मातुःपितुर्बन्धुजनाच्च सख्युरिष्टाद् वरिष्ठो द्विज एव नान्यः।
दातार एतेऽत्र मनोरथानामन्यः सुमान्यः सुखदोऽपि नाके ।।

आहूय गेहात् प्रणिपातपूर्वं वित्तं प्रदत्तं समवाप्य किञ्चित् ।
नाके ददत्यादरतोऽप्यनेकं केऽन्ये सखायः क्षितिदेवताभ्यः?।।

व्याजाद् द्विजानां प्रविधाय देहाच्चरन्तमूर्व्यां जनमङ्गलाय ।
तदीयमायाबलतोऽत्र केचिन्मूढा निगूढं न हरिं विदन्ति ।।2/58-62।।

स्वरूपं जगदीशस्य हरेःरूपं द्विजन्मनः।
कलाविद्धमलाक्रान्त-जनता घनतापहृत्।।

कृपा कृपालोर्जगदीश्वरस्य यदा पदाब्जस्य भवेदपारा ।
तदैव दैवोदयवीक्षितस्य भक्तिर्द्विजाङ्घ्रावुदयं प्रयाति ।।

सुज्ञेन पुंसा तरलं नितान्तं विज्ञाय सर्वं खलु वित्तजातम्।
कल्पान्तकालेऽपि तदक्षयाय भूदेवभूमध्यनिधौ निधेयम्।।

मुखद्वयं यद्यपि माधवस्य द्विजाग्निरूपं जगति प्रसिद्धम् ।
तथापि विप्रे प्रियता तदीया पुंसो यथा दक्षिणबाहुदण्डे।।

अदृष्टमूर्तिर्जगति प्रसिद्धः श्रीवासुदेवः पुरुषः पुराणः।
परन्तु जानन्ति जनाः किलाज्ञा नैवास्य मूर्त्तेः स्फुटतां द्विजेषु ।।

अदेवताधीः क्षितिदेवतासु संजायते यस्य नराधमस्य।
नो सम्पदामेष कदापि गेहं तथापि देहं विपदः श्रयन्ते।।

द्विजाङ्घ्रिनीरोद्भवनीरलेशः स्फुटं स गङ्गाजलतोऽपि पूतः।
तमन्यथा तात! कथं समानं मूर्ध्ना ववन्दे जगतामधीशः।।

देहस्यापि च गेहस्य परमेकं विशोधनम्।
सेचनं यत् पयोलेशैः ब्राह्मणाङ्घ्रिसमुद्भवैः।।

ग्रामोऽभिरामोऽनुगतः कदापि मध्येऽपि मेध्येन पदा द्विजस्य ।
कीर्णान्यवर्णैर्नगरी ततोऽन्या धन्यापि शून्या गुणतोऽनुमेया ।।

संसारपाथोनिधिकर्णधारैरुच्चार्यमाणोऽपि सकृद् द्विजेन्द्रैः।
कर्णातिथिर्यस्य हि वेदघोषः कस्तोषपात्रं न भवेद् भवेऽस्मिन्?।।

उपकृतिर्न यतो जगतो भवेद् विरहिणामपि तापचयक्षितिः।
द्विजवरोदरसम्भरणञ्च नो न रजनी रजनीसमतां व्रजेत् ।।

सन्तु स्थिराङ्गा अपि मत्तनागास्तुङ्गास्तरङ्गाः पदगाः रथाङ्गाः।
दत्तं तथाप्यग्रभवाय दानं जाने निदानं नृपतेर्जयस्य ।।

आपत्समाना परमापि सम्पद् यया धिया निर्मलया समेतः।
अखण्डमाखण्डलबन्धुपूज्यान् प्राज्यार्पणेनातनुतेऽतितुष्टान् ।।2/63-75।।

पारङ्गतोऽयं द्विजनुःश्रुतेश्चेद् ब्रह्माकृतिः सत्सुकृतैकराशिः।
अब्धेर्विधीनामिह तस्य लब्धिः सद्भिः कृतोच्चं स्वकरं समुक्तम्॥

तथाविधश्चातिबुधः कदाचित् कालेऽनले वीतमलङ्करोति ।
होमं निकामं विदधीत कामं पूर्णं धरेशस्य सुरेश्वरोऽब्दैः ॥

तस्यैव वित्तं पुरुषस्य सत्यं कृत्यं यतः सिद्ध्यति भूसुराणाम् ।
अन्यद् यदेतद् रिपुणा सदक्षं पक्षं छिनत्युद्गमने जनस्य ॥

दत्ता स्वयं वा निजपूर्वजैर्वा वृत्तिः परेणापि धराऽमरेभ्यः।
तस्या यदि स्यात् कुमतेर्जिघृक्षा कक्षा परा सैव शुभागमस्य ॥

ब्रह्मस्वसंग्राहमतेर्विलासः सञ्जायते दैवहतस्य यस्य ।
रूपान्तरेणान्वयकाननेऽस्य स एव दावः स्फुटतां प्रयातः ॥

यथा धेनुतनोः क्रव्यं तद्वद् द्रव्यं द्विजन्मनः।
स्पर्शायापि न वै योग्यं कुतो भोग्यं भवेदिदम्?॥

सर्पणं सर्पवदने करस्य वरमेव तत्।
नादाने ब्रह्मवित्तस्य यतो नाशोऽन्वयस्य च॥

द्विजापमानः प्रतिमः कलङ्को नैवाद्भुतः साधुजनं समेतु।
विदूरतोऽप्याशु समूलमेव यः कीर्त्तिचन्द्रं सकलं पिधत्ते॥

सञ्जातकोपं प्रसमीक्ष्य विप्रं क्षिप्रं प्रसादं नतिभिः प्रणेयः।
हुताशनोऽयं ज्वलनप्रसिद्धः क्रुद्धः स नाशं कुरुतेऽन्वयस्य ॥

आशीर्द्विजानां सुकृतोदयेन सम्प्राप्यते येन नरोत्तमेन।
स पूरुषस्तत्पुरुषार्थपात्रं गात्रं तदीयं विगतामयञ्च॥

एकं सखे ! त्वां प्रवदामि गोप्यं सखा न सख्या किल वञ्चनीयः।
यद्यस्ति वाञ्छा सकलार्थलाभे विश्वासमङ्घ्रौ कुरु वाडवानाम्॥2/76-86॥

चिन्तातुरः कोऽपि च भूसुरः स्याद् भक्ष्याद्यभावाद् विषयेषु यस्या ।
तद्देशनाथोऽपि तथैव पाथोधरप्रदत्ताल्पकवर्षणेन॥

स्वकर्मनिष्ठाः शुचयोऽतिशिष्टाः कष्टान्निजं जीवनमाचरन्ति।
राज्ये यदीये न भवेत् स राजा किञ्च प्रजास्तस्य न वृद्धिभाजः॥2/88-89॥

कष्टस्य कारणं दुष्टः किञ्च स्वेष्टस्य नाशकः।
नासौ सङ्गतये योग्यः स्मर्त्तव्यं रामशासनम्॥2/90॥

शिष्टस्यापि च दुष्टस्य नान्तरं दृश्यते स्फुटम्।
अपूर्वं चिन्त्यते याम्यां कल्याणं जगतामिह॥2/92॥

सम्पत्कृतार्था भवतीह सैव स्याच्चेदियं विप्रकरे प्रदत्ता।
अन्यातिधन्यापि तले धरायाः व्यर्था समर्था इति संवदन्ति ॥3/106॥

भवसिन्धुनिमग्नानां सर्वेषामपि देहिनाम्।
तरणे तरणिर्नान्या क्षमा रामपदादिह॥3/163॥

नामरैर्मेऽपरैरर्थः कुतोऽसारतरैर्नरैः।
एकमेवाश्रये रामं यतः कामं परं श्रये॥

यतो यान्ति मृतिर्नाशं स्मृतिःरामपदस्य सा।
क्रियते न कुतो मूढ! या च रूढपदप्रदा?॥3/178-179॥

बद्धश्चेद् हृत्पशुः कीले नीलेन्दीवररोचिषः।
ध्याने जाने जनेऽनेन विजने भविता सुखम्॥

सक्षताद रक्षतात् साक्षात् रक्षःकक्षा-शुशुक्षणिः।
अलङ्कारश्च लङ्काया अलङ्कायाद् वियोजितः॥

प्राप्याप्यत्र पवित्रभूसुरतनुं नैवातनुं तन्वते
धर्मं कर्मविचारचञ्चुरतरान्संसेव्य विद्वद्वरान् ।
किञ्चाखण्डलदेवमण्डलनुतश्रीरामपादोन्नत-
ध्यानाक्षिप्तभवोद्भवानपि बुधान् धिक् तान्मनुष्याधमान्॥3/182-184॥

आननं काननं तत्तु दुष्पदश्चापदास्पदः।
यत्राभिरामरामाख्य-विख्याता न चरन्ति चेत्?॥3/188॥

राजते भक्तराजः स यस्य रामस्मृतिर्भवेत् ।
गात्रं रोमाञ्चितं नेत्रं सजलं विकलं वचः॥

पश्चादपि पुरो यस्य पार्श्वयोरन्तरेषु च ।
रामचन्द्रः स्फुरद्रूपस्तस्य ज्ञापः कुतो भवेत्?॥3/190-191॥

रामध्यानसुधासारपूरपूर्णोदरस्य मे।
कथं यातूदयं वाञ्छा दुच्छास्वादान्नभोजने?।।3/192।।

स क्षणो रक्षणं नैव करिष्यति ममात्मनः।
प्रवदेत् यत्र नो जिह्वा रामरामेति जीवनम्।।

नान्यः कृपानिधिः रामात् लोके कोऽपि विलोक्यते।
कर्त्ताऽसंख्यापराधानां येनायं रक्षितः पदे।।3/195-196।।

पुनः पुनरहं याचे प्रणिपत्याखिनान् सुरान्।
अनिशं मे भृशं भूयाद् रामनामपदस्मृतिः।।3/198।।

कथं दुःखेष्वयं लोकः स्तोकादेव निमज्जति।
एतद् ह्येयं मनो देयं ध्येये रामपदाम्बुजे।।3/202।।

शून्येन दान-भोगाभ्यां द्रव्येन द्रव्यवान् भवेत्।
तत्कथं न जनाः सर्वे द्रव्यवन्तः सुमेरुणा?।।

नृपेन्द्रस्य द्विपेन्द्रस्य गौरवं देवनिर्मितम्।
शोभायां तु परं दानं निदानमुभयोरपि।।

राजन्! रमा चेत् परमापि लब्धा लोकैर्न तोषश्चतुरैर्विधेयः।
दृष्टाप्यदृष्टा सहसा विहारं नीहारवत् सा कुरुते प्रसिद्धम्।।

धर्मं कुरुष्वानिशमीशबुद्धे! सिद्धेरयं कारणमायतीनाम्।
श्रेयान् सखा सर्वसुखाद्यकर्त्ता हर्त्तापदामत्र च तत्र लोके।।

भाग्योदये भाग्ययवता जनेन धर्मो विधेयो न विधेयमन्यत्।
धर्मं विना नैव कदापि किञ्चित् सहायभावं समुपैति कोऽपि।।

भानूपरागे हृदि सानुरागे ध्यायन् यदाऽयं जगदीश्वराङ्घ्रिम्।
ददाति भूमिं सति तीर्थराजे राजेन्द्रभावं स नरः प्रयाति।।

उच्छलत् सलिलभङ्गभङ्गुरा वागुरा नरकुरङ्गरोधने।
काम्यते किमु रमात्र साधुना साधुनार्णवसुतेन बन्धुना।।

रे त्वया विमलचेतसा धनं साधनं बहुसुखस्य साधवे ।
नार्पितं हृदि विचिन्त्य माधिपं माधिपङ्क्तिजननं वृथा कृथाः।।4/111-118।।

पूर्णतां यद्विभजेन्न कामना का मनागपि ममास्तु वेदना ।
किं सदैव निजदैव-नोदिता नोदिताऽभिनवसौख्यसम्पदः।।

इच्छितं प्राप्यते सर्वै र्न त्वयैत्यत्र कारणम्।
नोद्गतं विधिवत्पूर्वमपूर्वं ब्राह्मणानने।।

लोलं वयश्चापि चयः श्रियां यः कायः सदायः प्रियतानिवासः।
सन्दृश्यते यत्तदशेषमेवमज्ञेन किं सुज्ञजनेषु वाच्यम्?।।

भोगारयः केवलमत्र रोगा योगाय नैते स्वसुखस्य किञ्चित्।
क्षणे-क्षणे कालकृतान्तराया नायाति कायादपि कोऽपि लाभः।।

कीटादीनां यथा कायः प्रायः प्रध्वंसभाजनम्।
मानुषाणामपि तथा वृथासक्तिरिहासताम्।।

संसारसिन्धौ पतितेन पुंसा यत्नोद्गतं निस्तरणे विधेयः।
कृते विलम्बे न विनाशतोऽन्यत् सखे! फलं तत्र विलोकयामि ।।4/119-124।।

पित्रा तुल्यगुणः पुत्रः कुत्रचित् पुण्यतो भवेत्।
जनकादधिको यस्तु वस्तुतः पुरुषोत्तमः।।4/129।।

तस्यैव संततिः पुण्या पुण्यानामिह संततिः।
येनार्जिता सताऽपूर्वं सर्वतीर्थनिषेवणैः।।4/131।।

बोधनं च धनं पुंसां साधनं सुखसम्पदाम्।
नापरं विद्यते राम! नामतः प्रेमतः स्मृतात्।।

रामनाम हृदा येन न स्मृतं तेन विस्मृतम्।
स्वहितं विहितं चापि पदमत्यपथे स्फुटम्।।

कथं न जननी तस्य जाताऽजातार्भकाहरे।
स्मरणं रामचन्द्रस्य तस्य नो हृदयान्तरे।।

जीवितेन फलं तस्य पापरूपस्य देहिनः।
भरणं च वरं राम-स्मरणं यस्य ते हि नः।।5/17-20।।

जनन्या जनकस्यापि नीचहा नीचता कृता।
रामरामेति सानन्दं नोच्चैरुच्चारितं वचः।।

स्मर रामं मनो नित्यमनित्यमखिलं जगत्।
भ्रमतोऽभिमतो नैव विश्रामः श्रमिणोऽन्यथा ।।

पापपात्रं हि तन्नेत्रं गात्रं तेनापि दूषितम्।
ये नालोकितलोकेश – रामचन्द्रपदाम्बुजम्।।

नास्माकं भविता भीतिः कालव्यालकृता क्वचित्।
रामनामौषधं सिद्धं दृष्टं बद्धं गले सदा।।

कृपाण्या केवलं वाण्यास्तस्याश्छेदः स्वयं हितः।
नोद्गिरत्यनिशं याहि पाहि रामेति दीनवत्।।

कालकोपानलज्वाला-जालानामतिशोषणम् ।
रामनामस्मृतेर्नान्यद् दृश्यते जलसेचनम्।।

श्रुते स्मृते प्रेयसि कीर्त्तितेऽपि रसालये नामनि राघवस्य।
सञ्जायते चेतसि यः प्रतोषो नैवास्य लेशोऽप्यमृतस्य पाने।।

वर्णोऽपि कर्णं यदि रामनाम्नः प्राप्तः कदाचित् सुकृतेन जन्तोः।
यात्येव नाशं तदमुष्य पापं नासौ प्रतापं भजते भवोत्थम् ।।

सत्यं वदामि चेतस्त्वां रामनामस्मृतेः परम्।
दृश्यते नैव रुचिरं किं चिरं भ्रमसे वृथा ?।।

यतो याति मृतिर्नाशं स्मृती रामपदस्य सा।
क्रियते न कुतो मूढ! या च रूढपदप्रदा ?।।

अबालं हृदये जालं दुःखानामुदितं यदि।
रामेत्युच्चारितं प्रोच्चैस्तत् क्षणादेव नश्यति।।

संत्यज्य शृणु सन्देहं सस्नेहं त्वां ब्रवीम्यहम्।
सम्मतो रामतो नान्यस्त्रैलोक्ये बहुना किमु?।।5/21-32।।
निधाय भूतले कायं रामायं कुरुतेऽर्थनाम्।
स्थातव्यं भवतां स्वान्ते मदन्ते समुपस्थिते।।6/33।।

संसारभीतिहरणं स्मरणं ते प्रकुर्वतः।
अस्तु मे मरणं राम! शरणं त्वामहं गतः॥6/34॥

रामचन्द्र-पदाम्भोजं भो जन्तो! हृदये कुरु।
शीतलं भविता तेन तत्तप्तं दुःखबह्निभिः॥

आयातादतिकोपेन निहन्तुं समवर्त्तिनः।
रक्षणं सक्षणं प्रोक्तं यत् क्षणं रामलक्षणम्॥

विना स्मृतिं श्रीरघुनन्दनस्य नान्यत् त्वया कर्म मनो विधेयम्।
स्याद्येन भूयो भवतोऽपि तापः पाप-प्रपञ्चैकनिकेतनत्वम्॥

यत्स्मृतेरपि दीर्घोऽयं भवरोगः प्रणस्यति।
तत्कथं त्यज्यते मूढ़! रामराम- महौषधम् ?॥

पापभारं कुतः स्फारं हारं वहसि दुर्मते!।
एकवारं श्रुतेः सारं नाम रामस्य कीर्त्तय॥

विधाय शपथं चास्याऽवितथं प्रोच्यते वचः।
मनोविनोदितारामं रामं नास्ति भवार्तिहृत्?॥

श्रवणे! श्रवणं नाम्नो रामस्य रमणं कुरु।
रस तत् रसनेऽखण्डं नो चेद् दण्डं करोम्यहम्॥

दुःसाध्या राम! ते सेवा अपि देवादिभिः प्रभो!।
अहं तु प्रत्यहं कुर्वे सर्वेशामृतिदां स्मृतिम्॥7/80-87॥

अणुःकणश्चेद्दहनस्य दाहं करोति कुत्रापि महावनानाम्।
नो कारणं तत्र पवित्रकीर्त्तेर्विना बलं तीव्रसमीरणस्य॥9/72॥

केनापि पुंसा विधिभाजनेन सद्भावपीयूषरसप्रपूरैः।
सिक्तो यदि स्यात् पृथुपुण्यवृक्षः फलं सदक्षः सुतनूजमेति॥

कृतानि संख्यारहितानि येन तीव्राणि गङ्गापुलिने तपांसि।
पुत्राः पवित्रा इति तस्य कर्णे वृष्टिः सुवर्णेन युता पुनः स्यात्॥9/74-75॥

तन्मङ्गलं मङ्गलमङ्गलानामलं बलं तच्छशितारकाणाम्।
लग्नं दिनं चापि शुभं तदेव श्रीरामनामस्मरणं कृतं चेत् ॥10/7॥

केनापि रामो हृदये कदाचित् स्मृतो मतो वावगतोऽर्चितोऽपि ।
नरो वरः सर्वचराचराणामेवं पुराणा मुनयो वदन्ति॥10/8॥

चामरं पामरं प्रायो प्राप्तं यद् रामसन्निधिम्।
किङ्करस्य करे दत्तं तेन तद् भ्रामयत्यसौ॥10/23॥

श्रीरामनामस्मृतितो भवन्ति रोमाणि यस्योल्लसदन्तराणि।
दृग्वारिधारा रचिताश्च हाराः कण्ठे विकुण्ठेशसखः स एव ॥

राजते भक्तराजस्सः यस्य रामस्मृतेर्भवेत्।
गात्रं रोमाञ्चितं नेत्रं सजलं विकलं वचः॥

स पुमान् पावनः कामं यस्तु रामं स्मरन् हृदि।
गात्रे रोमोद्गमं नेत्रे वारिधारां च संश्रयेत्॥11/54-56॥

मूढगूढपदशात्रवासने वासनेषदपि तावकी भवेत्।
वर्त्तते न समवर्त्तिनोदरः पामरः स्मरशरोदितः कुतः?॥12/118॥

आराधिते येन पदारविन्दे सर्वप्रदे मैथिलजाधिपस्य।
तस्यात्र किं भाग्यवतोस्त्यगम्यं यच्चातिरम्यं भुवनत्रयेऽपि ॥

नैवास्ति पुत्रे न कदापि मित्रे नो वै कलत्रे न विचित्र-पत्रे ।
मन्मानसं नीरजपत्रनेत्रे ससीताकलत्रे जगतां पवित्रे ॥

आनन्द आनन्दकलेवरस्य विचित्रलावण्यकलाकुलस्य।
सञ्जायते ध्यानवशादमुष्य वाच्यो भवेत् केन लवोऽपि तस्य?॥12/131-133॥

जले गाङ्गे स्नानं तदनु हरपूजाविरचनं
ततो देवस्थाने क्षणमपि तदाख्यानकथनम् ।
पुनः साकं सद्भिर्विकसितमुखाब्जं च हसनं
यदि स्यान्मे नित्यं मधुमथन! लोके किमधिकम् ?॥12/141॥

रामाभिधानं तव चिन्निधानं प्रायः प्रधानां परमार्थलाभे।
श्रेयोनिधानं सुखसंनिधानं जिह्वासमानं पठनं करोतु॥

सन्त्येव काष्ठापतयो वरिष्ठा देवा जनेष्टा बहवस्तथापि।
साकेतपाले परिशुद्धशीले हृन्मेऽब्दनीले महसि प्रसक्तम् ॥12/169-170॥

भक्तिर्यदीया रघुनाथपादे संसारखेदेन स मुक्त एव।
किञ्चाखिलं पूर्वकुलं स्वकीयं तेनोद्धृतं कालकरालवक्त्रात् ॥12/174॥

या संसक्तेऽप्यनासक्ता त्यक्ताऽव्यक्ताशयाङ्गना।
अनासक्ते तु यासक्ता रक्ता मुक्ताविहास्पृहाः॥12/179॥

न मुक्तिरधुना दूरे धीरे रामस्मृतौ पुनः।
क्रीडां गाङ्गे सदोत्सङ्गे चित्तरङ्गेण कुर्वति ॥12/181॥

पापभारं कुतः स्फारं वारं वारं वहस्यरम्।
एकवारं श्रुतेः सारं नाम रामस्य कीर्त्तय॥12/183॥

नोपकारः परो जिह्वे! विस्मर्त्तव्यस्तवानघे!।
उत्तारितो भवाम्भोधेरयं रामेति कीर्त्तनात् ॥12/187॥



